श्रीः

# शास्त्रबोधः ।

पं. विरूपाक्षवडियरस्वामिना
विरचितः





शाकः १८३८ क्रैस्ताब्दः १९१६

श्री लक्ष्मी-विलास स्टीम प्रेस इंदोर.

श्रीः

# शास्त्रबोधः ।

पं. विरूपाक्षवडियरस्वामिना
इंदूरमहाराजहोळकर-
संस्कृतमहाविद्यालय-
वेदभाष्यप्रधानाध्यापकेन
विरचितः

शाकः १८३८ क्रैस्ताब्दः १९१६

# SHASTRABODHA

BY

Pandit Swami Virupaxwodeyar Vedtirth.

Professor of Ved-Bhashya

SANSKRIT COLLEGE INDORE.

Chawadadanpur, Post-Rane-Bennur.

(DHARWAR.)

# शास्त्रबोधे प्रतिपादितविषयसंग्रहः ।



## तत्रादौ प्रथमभागे ।

शास्त्रप्रयोजनस्य विचारः ।

शास्त्रशब्दस्य व्याख्यानम् ॥

वेदस्य नित्यत्वार्थत्रयसर्वज्ञत्वादिप्रदर्शनम् मंत्रोक्तऋषिदेवतादीनां कल्पनाया यथार्थविवेचनम् । पाश्चात्यैः वेदविषये प्रदर्शितकालनिर्णयस्य खंडनं च ।

ज्ञानकांडविचारः ।

द्वैताद्वैतविवेचनपूर्वकात्ममीमांसा सगुणनिर्गुणोपासनाविधिश्च

## द्वितीयभागे ।

पश्वादिहननिषेधपूर्वकं यज्ञधर्मस्य विशेषतो व्याख्यानम् । पशुशब्दस्यान्नवाचकत्वादिप्रदर्शनम् पंचमहायज्ञानां यथार्थनिर्णयः कोऽयं धर्मः । तथा धर्मस्य लक्षणानि कानि ।

भूतदया ( प्रेम ) आचारविचाराहिंसाऽधिकारभक्तिराज-प्रजानुरागादीनां विस्तरेण व्याख्यानम् ।

## तृतीयभागे।

आर्यदस्युभेदद्वयानिरूपणपूर्वकं वर्णचतुष्टयस्य प्रतिपादनम्। जन्मसिद्धजातिवादनिषेधस्तथाऽनंतजातिकोलाहलस्यायथार्थनिदर्शन-पूर्वकं खंडनं। गुणकर्मस्वभावानुसारत एव सर्वेषामुच्चनीचत्वा-दिपरिकल्पनम्। कलावपि क्षत्रियवैश्यानां स्थितिप्रदर्शनम्। शूद्रविष-यस्य सम्यग्विवेचनम्।

## चतुर्थभागे।

सर्वेषां स्त्रिपुरुषाणां (ब्रह्मक्षत्रियवैश्यशूद्रादीनाम्) विद्याध्य-यनाध्यापनाश्रमाद्यंगीकारे समानाधिकारप्रतिपादनपूर्वकं ब्रह्मचर्यगृह-स्थवानप्रस्थसन्यासाश्रमचतुष्टयस्य विस्तरेण निरूपणम्।

इंदूरमहाराजदर्बाराज्ञानुसारं महाराजहोलकर संस्कृतमहाविद्यालयप्रिन्सिपालमहोदयैः कलिकातागवर्नमेंट संस्कृतकालेजाध्यापकसमित्या परीक्ष्यैतद्विषयकोऽभिप्रायः प्रेषणीय इति प्रेषितस्यास्य शास्त्रबोधपुस्तकस्य विषयेऽधोनिर्दिष्टानुसारं कलिकातासंस्कृतकालेजप्रिन्सिपालमहाशया अभिप्रायं निवेदयंति ।

OFFICE OF PRINCIPAL SANSKRIT
COLLEGE, CALCUTTA.
27–4–1918.

DEAR SIR,

Please accept my sincere thanks for a copy of "Shastrabodha" which you have kindly sent me, it contains many important matters written in idiomatic sanskrit. The principal topics of Indian philosophy and socio relgeous enstitutes have been dealt with in a lacid styte. The book reflects great credit on the outher and fully deserves public patronage.

Yours sincerely,
(Sd.) SATISHCHANDRA VIDYABHUSHANA,

o

The Principal, Holkar Sanskrit
Mahavidyalaya, Indore.

# शुद्धिपत्रम्.

| भागः | पृष्ठम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | १ | तूदारचरितं | त्वौदार्यबुद्धिं |
| ,, | ६ | प्रथितः | कथितः |
| ,, | ६ | सत्य | सत्यं |
| ,, | १० | रातचत् | रितिचेत् |
| ,, | १६ | निरुता | निरूपितः |
| ,, | १६ | सुारेण | सारेण |
| ,, | १७ | प्यतदा | प्येतादृश |
| ,, | १७ | सव | सर्वं |
| ,, | २० | भणंतिज्ञाः | भणंतितज्ज्ञाः |
| ,, | २२ | गजुर्वदपि | यजुर्वेदेऽपि |
| ,, | २४ | ऊर्णनाभिजतु | ऊर्णनाभिजंतुः |
| ,, | २६ | रेक्षणन | रेक्षणेन |
| ,, | ३१ | प्रकृतावाभ्रमनाणः | प्रकृतौ भ्रमणाण |
| ,, | ३२ | श्रा प्रेर्यमाणः | श्रांतः प्रेर्यमाणः |
| ,, | ३२ | साक्षात्कार | साक्षत्कारोऽ |
| ,, | ३३ | उद्धरेदात्मानम् | उध्धरेदात्मनात्मानम् |
| ,, | ३४ | चालयमान | चालयमानो |
| ,, | ३५ | मुह्यांति | अज्ञानेनावृतंज्ञ नंतेन मुह्यंतिजंतवः |
| ,, | ३५ | वियरीत | विपरीत |

| भाग: | पृष्ठम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ३६ | कालाष्मन् | कल्मषः सन् |
| ,, | ,, | चितस्या | चित्तस्य |
| ,, | ,, | तदक्रमेणन | तदतिक्रमणेन |
| ,, | ,, | परमात्मने | परमात्मनो |
| ,, | ,, | मूळकारणभूत | मूळकारणभूतं |
| ,, | ,, | मनसे | मनसो |
| ,, | ,, | मसाना | मळानां |
| ,, | ,, | रागद्वेषावसंतो | रागद्वेषाभावे |
| ,, | ,, | राग | एव |
| ,, | ,, | वाक्ये | वाक्यैः |
| २ | २ | पश्चादिष्वा | पश्चादिश्वा |
| ,, | ३ | व्यवहः | व्यवहारः |
| ,, | ६ | वेद | वेदा |
| ,, | १९ | वय | वयं |
| ,, | १९ | साक्षात्कृतधर्माः | साक्षात्कृतधर्मा |
| ,, | २० | सजाता | संजाता |
| ,, | २२ | धूर्तै | धूर्तैं |
| ,, | २३ | वमेव | वयं |
| ,, | ३९ | पयंत | पर्यंत |
| ३ | ४ | अतुं | अर्तुं |
| ,, | ९ | आयो | आर्यो |
| ,, | १५ | यते | यतो |
| ,, | १९ | वय | वयं |
| ,, | २१ | कुल्यादय | कुल्यादयः |

| भागः | पृष्टम् | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३ | २१ | शिल्पशास्त्रज्ञता | शिल्पशास्त्रज्ञतां |
| ,, | २३ | सपदीयंतु | संपादयितुं |
| ,, | २४ | परचेदा | परंचेदा |
| ,, | २४ | यथामाति | यथायमति |
| ,, | २७ | ब्रह्मण | ब्राह्मणा |
| ४ | २ | पितन्माता | पितृन्माता |
| , | ६ | विषयनुसंधानार्थं | विषयानुसंधानार्थं |
| ,, | १० | स्यात | स्यात् |
| ,, | २१ | ऐकवत्वं | ऐक्यं |
| ,, | २१ | गणितः संति | गणितोऽस्ति |
| ,, | २२ | दुःखाकुलौः | दुःखाकुलौ |
| ,, | ३० | सस्कृत | संस्कृत |
| ,, | ३१ | विज्ञोन | विज्ञान |
| ,, | ३१ | गुणेष | गुणेषु |
| ,, | ४० | भवेदीत्य | भवेदित्य |
| ,, | ४१ | दुर्दश | दुर्दशां |

श्रीः ।

गुर्वाज्ञापरिपालनं हि परमो धर्मः सदेत्याह यो ।
वेदोदीरितकार्यसाधनविधौ यस्यास्ति बुद्धिःसदा
यस्य प्रेरणया मया विरचितः शास्त्रीयबोधो मुदा।
सोऽयं विश्वविभूषणो विजयते मल्हारभूपः सुधीः॥

विख्याते समरांगणे तु सुजनैर्वंद्ये पवारे कुले ।
श्रीमल्हारपदांकितो धृतजनिर्देवासभूपोऽस्ति यः।
धर्माधर्मविवेचनासु चतुरःप्रद्योतिविद्यामणिः ।
लब्धं तस्य सुदर्शनं मम मतं सर्वात्मनाभावितम्॥

सल्लापेत्वतिशोभिते सुमनसा तत्वार्थसंयोजिते ।
आसीन्मे हृदये यथा विगणितं राजेंद्रचित्ते तथा ।
दृष्ट्वा वाक् पटुतां विचारसरणिं तूदारचारितं तथा।
तुष्टौ वांछितमेलनेन कथितो राजर्षिणेत्थं मुदा ॥

स्थित्वैवात्र विलेखनीयमधुना वेदार्थसंबृंहितम् ।
संसारोपकृतेः कृतौ बहुभवेद्यस्यादरोऽस्यांभुवि ।
एवं बोधितराजवाक्यमपि मे संस्थाप्य समग्हृदि ।
वेदोदीरितवाक्यमेव लिखितं सन्मार्गसंबोधकम्॥

वित्तं येन परोपकारमनसा नित्यं कृतौ दीयते ।
भ्राता यस्य सदाशिवेति विबुधःसन्मान्यराजेश्वरः
यस्मिन्मंत्रिपदंनिधाय कुशले हृष्टोऽस्ति भूपःस्वयम्
एतौ द्वौ बहुमंगलार्थसहितौ लोके चिरंजीवताम् ।

ज्ञानप्रसारो मनुजस्य धर्म-
स्त्वित्येव संभाव्य कृतोद्यमेन ॥
अद्वेषभावेन विलेखितं यत्
आशेति भूयाद्विदुषां मुदे तत् ॥

---

ओ३म् ।

# भूमिका



सुविचारितमिदं भाषाबाहुल्यादेव देशो दुर्दशां संव्यधत्तेति । दुस्थिति गतेऽस्मिन् देशे च बहवो विद्वांसस्तदुन्नत्यर्थं प्रयतंत इति परिदृष्टमेतत् । परमेवं सति अस्माभिस्तदेतद्वंच्यत इति न मंतव्यम् । यतो जानंति सर्वे जगदारभ्याद्यात्रावधि प्राणिमात्राणां महोपकारिणीयं संस्कृतभाषेति । तथा पृथिव्यामस्या अपि प्राचीनतमा भाषा कापि नास्तीति सर्वेषामेककंठरवः । एवमियमेव भाषा तिरोहितविषयांतरभावमप्रतिमविषयं च समुपनयतीति तन्नैतदाश्चर्यम् । यदस्यां भाषायामेव प्राक्तनानां सृष्टिपरमात्मज्ञानाविष्करणमस्ति । अतः सर्वासु भाषास्वस्या एव गौरवं प्राधान्येन मत्वा संस्कृतप्रबंधानां प्राचीनानां रहस्यावबोधे तस्यामेव भाषायां व्याख्यानं सुमहान् अभ्युपायस्तथा कस्याश्चिद् भाषाया रहस्यमवबोधयितुं भाषान्तरेण नैव शक्यते तस्मात्तद्भाषापरिशीलनमप्यावश्यकमित्यपेक्ष्य सर्वशास्त्रसारं सनास्वाद्यमानस्तस्यामेव तद्भावं प्रकटयितुं कृतारंभोऽस्मि । यद्यपि सांप्रतमस्याः प्रचारो विरलतमः । यतोऽद्यतनीनाः पंडिताः परकीयभाषानुरक्ताः परानुकरणमात्रपटवः परधर्माक्रांताः संतः सैषा मृत

भाषेति प्रजल्पंतः कुतर्दुर्लक्षाः । किन्तु नैतावता तुष्टाः परं तन्निर्मूलयितुमपि कृतसाहसा दृश्यन्ते । परमेतेषां साहसोधूलिधूसरप्राय इति परिभाव्य तस्या उन्नत्यर्थं कृतप्रयत्नोऽहम् । यद्यस्यां भाषायामज्ञानतिमिरध्वंसकारिजाज्वल्यमणिमाणिक्यादिरूपज्ञानसंपत्तेः संप्राप्तिर्वर्तते । तर्हि तदेतद्दूरीकरणं कियत्तुच्छमित्यक्षरमुखैः किंनानुसंधेयम् । अस्मिन् ग्रंथे विषयाः प्रतिपादताः संति यावच्छक्यं नानाविधप्रमाणान्यवलंब्य । तथापि प्रमादानां मनुष्यमात्रनिष्ठतया मनुष्यगतनैसर्गिकचित्तस्फालनेन दृष्टिदोषेण च यदि क्वचित्स्खलनमालक्ष्येत तद्विबुधाः संशोधयेयुः सहेरंश्चेति अभ्यर्थ्यते ।

नायं ग्रंथः किमप्यपूर्वं नवीनमतं प्रवर्तयितुमुत्सहते । किंतु ईश्वरप्रणीतवेदेषु तदितरर्षिप्रणीतग्रंथेषु च सिद्धांतितो यो विषय संग्रहः स एव पूर्वोत्तरपक्षवचनं पुरस्कृत्य तस्मिन् पूर्वाचार्यग्रथितान् प्रामाण्यविषकान् सिद्धांतान् समाहृत्य तानेव प्रामाण्येनांगीकृत्य ग्रंथेऽस्मिन् संक्षेपेण वर्णितोस्ति । परं चिरंतनाचार्याणां मतेषु यद्व्यभिचारसंपातः पातितः कैश्चन पंडितंमन्यैः । दोषस्यास्यानाप्त प्रणीतग्रंथाधारेणोद्घाटितत्वात् अप्रतिपन्नपुरुषसंभवात् पक्षोऽयं हेय इति निश्चित्य साररूपेणायं ग्रंथः समुल्लिख्यते । यत ईर्ष्यावादप्रपंचेन जर्जरितस्य वैदिकधर्मस्याधुना जीवनमपि कष्टतरं संभूतमस्तीति दुःखास्पदंमनः । यद्यपि वहवः प्रस्थानभेदाः प्रदर्शिताः । परन्तु न हि ते मुनयो भ्रान्ताः । किन्तु बहिर्विषयप्रवणानामापततः परमपुरुषार्थे विश्वासः प्रवेशश्च न भवतीति तेषां नास्तिक्यनिवारणायैवं भेदवादः स्वीकृत्य भेदाः प्रदर्शिताः । वस्तुतः सर्वेषां प्रस्थानकर्तॄणां

महर्षीणां तात्पर्यमभेदरूपमेवास्तीति वेद्यम् । श्रुतिप्रामाण्यं हि वैदिकधर्मप्रचारः । निखिलजगदाधारभूतं ब्रह्म तत्प्रतिपादनपरा श्रुतिः। यद्येतादृशी श्रुतिरेवाज्ञोपहासप्रहाक्रान्ता स्यात्तर्हि दूरापास्तं ब्रह्मज्ञानं विलुप्तप्रायो धर्मादिप्रचारः । एवं निखिलवेदविद्याधर्मानुष्ठानादिविलयनप्रसंगे प्राप्ते सति जगन्नियामकस्येश्वरस्यागाधशक्तिप्रभावेण प्रादुर्भवन्ति खलु तत्र तत्र समयानुसारं सतां विभूतयः । तत्तत्सामयिकस्याचारविचारादिविषयस्यग्लानेर्निवारणायेति विश्वस्य विषयमनुसरामि ।

---

ओ३म्

# शास्त्रबोधः ।

सारो वेदगिरां हि येन विततो निःश्वासबोधामृतैः ।
यस्यानुग्रहतो मनश्च मनुते याद्दच्छिकीं भावनाम् ।
यस्मिन् संति समस्तभाग्यनिधयस्त्वानंदमूर्तिश्च यः
सेव्यः श्रीशिवदेवनामकथितः श्रीमुक्तिनाथो यतिः।

जगत्येवं दरीदृश्यते प्राचीनार्वाचीनानां महद्वैषम्यम् यतो यन्नानापथागता नानालोकविभासिता नानाकटाक्षावलीढा च भावितास्ति अतिप्राचीनशास्त्रीयशिक्षणसरणिः सैषा वैषम्यमूलेति संभाव्यते।

परंच नात्स्यस्माकं व्यामोहः कोप्यत्र । भवतु नाम ये परस्परविरोधिनस्तेषां मतं यद्वा तद्वा । वयन्तु सत्यप्रतिपत्तिमतां मतमेवात्मसात्कर्तुं निष्पन्नहृदयभावाःस्मः । वस्तुतः सत्यज्ञानानुसंधानशीलानां मूलसरणिरेव मार्गणीया भवति स एव शिष्टाचार इति विख्यातः तच्छिष्टाचारस्यैव प्राधान्यं लोके ।

## प्रयोजनविचारः ।

निखिलप्राणिमात्रानुभूतविषयोऽयं समस्ततन्त्रसिद्धान्तश्च । यत्कृमिकीटपतंगादीनामपि प्रयोजनविच्छिन्नप्रवृत्ति-

नास्तीति । एवं सति मननशीलसमर्थानां मानवानां विषये किं कथनीयम् ॥

एवं प्रयोजनमुद्दिश्यैव प्रवर्तमाना अबालवृद्धा जंतवो- दृश्यन्ते अत एव वरीवर्त्यंते ऋषगिामुक्तयः । प्रयोजनं विना मन्दोपि न प्रवर्तते । यतः प्रयोजनपुरस्सरा खलु प्रवृत्तिः प्राणिनामिति । परं प्रयोजनानामप्यनंतत्वं यतो विषयाणामनंत्यत्वात् । वस्तुनः प्रयोजनैकत्वेपि लक्ष्यभिन्नत्वात् तद्गतभावनानामपि भिन्नत्वमुपचर्यते । सत्स्वपि प्रयोजनशतेषु सर्वं मनुष्यत्वसम्पादनेऽन्तभूर्तम् । परं किन्नाम मनुष्यत्वसम्पादनमितिचेत् कोहं । क्व गन्ताहं । कावा स्थितिर्मे । कावा गतिः कुतः कस्मादहमत्रागतः इत्यादिनिर्णय एव मनुष्यत्व- सम्पादनमिति विज्ञायते । अत एव नात्स्यत्र सन्देहलेशोपि मनुष्यत्व- सम्पादनार्थमेव सर्वशास्त्रोद्देशो व्यवहारश्चेति । अर्थात् मनुष्यत्वसम्पा- दनोपायं निरूपयितुं तत्साधयितुंच्च शास्त्रं प्रवृत्तमिति सिद्धम् ।

परं यदूर्ध्वमदर्श्यत महावैषम्यादीनां मूला शास्त्रीयशिक्षण- सरणिरेवेति । किन्नाम तल्लक्षणं कथं वा तत्संपद्यते कस्तस्याधारः । इतिचेत् वयमपि कृतविचारा विषयमिममेवावलम्ब्य । तद्यथा शिक्ष्यत इति शिक्षणम् । अथवा यथा आत्मिकदैविकभौतिकत्रयमेतत्के- नोपायेन नियम्यते तच्छिक्षणमिति । तन्नियमनस्य मूलकारणं ज्ञानं तज्ज्ञानमेव वेदः शास्त्रम् । इत्यादिपर्यायवाचकैः शब्दैर्व्यवह्रीयते । अत एव सर्वेषां शास्त्राणां समालोडनेन य उद्देशः साक्षात्परम्पर- या प्रचलितविषयश्च निष्कर्ष्यते तत्परिशोधयितुमिच्छामः ।

## शास्त्रशब्दस्य व्याख्यानम् ।

ननु शास्त्रशब्दो लेखनक्रियामपेक्ष्यते किमु । न कुत्रापि दृष्टो लेखनव्यवहारःशास्त्रस्येति । तथा चेत् भवद्व्याख्यानमपि न संगच्छेत । ननु इति भीषया किमाभीषयासि । यल्लेखनक्रियादोषमारोपयसि स दोषारोपो लेखके कदापि न सम्भवति । यतोऽयं वेदवादी सदासत्यमेव दर्शयति । यथा शास्त्रशब्दो व्याख्यातो वात्स्यायनमहर्षिणा न्यायदर्शनभाष्ये " इतरेतराभिसम्बन्धस्यार्थसमूहस्योपदेशःशास्त्रमिति " नह्येतेन लेखनमुद्रणादिविशिष्टपुस्तकस्य नाम शास्त्रमित्युक्तं भवति । तथाच " उपदेशआद्योच्चारणमिति " पाणिन्यादिभिरुक्तत्वादाद्यमहर्षीणामुक्तिरेव शास्त्रमितिसिद्धम् ।

## वेदस्य नित्यत्वप्रतिपादनम् ।

तत्रादौ वेदाः शास्त्रमित्युक्तं ते वेदा अपौरुषेया अनाद्यनंताः सर्वधर्मस्य मूलमिति च । ज्ञानार्थवाचक " विद् " धातोर्घञ्प्रत्ययेन निष्पन्नस्य वेदशब्दस्य ज्ञानवाचकत्वं सर्वशास्त्रेषु समुपलभ्यते ज्ञानं नित्यं " यतः सत्यं ज्ञानमनन्तं ब्रह्म " इत्यादिश्रुतिभिः ज्ञानं ब्रह्मलक्षणे लक्षितमस्ति । यतो धर्मी नित्यस्तद्धर्मोपि नित्य एव । अतएव शास्त्रयोनित्वादिति सूत्रं भगवता व्यासमहर्षिणा कार्यकारणभावेनांगीकृत्य निर्दिष्टमस्ति । तथैव कार्यकारणकल्पनया शास्त्रस्य प्रौढिंदर्शयन् " सर्वज्ञ कल्पस्य शास्त्रस्ये"ति सिद्धान्तयति भगवान् श्रीशंकराचार्यः । अस्मिन् अन्यानि बहूनि प्रमाणानि लभ्यंत

एव ज्ञाननित्यत्वे । यथा "चत्वारिशृंगा त्रयोअस्यपादाद्वेशिर्षे सप्तहस्तासोऽस्य त्रिधा बद्धोवृषभो रोरवीति महादेवोमर्त्यां आविवेश ।" इति ऋग्वेदस्य मंत्रमुच्चार्य महाभाष्यकारो महर्षिपतंजलिः कार्यकारणभावेन शब्दस्य नित्यानित्यत्वं व्यक्ताव्यक्तभावेन स्फुटीचकार । अस्मिन्मंत्रे द्वौ शीर्षावेव नित्यानित्ये इति मन्तव्यमेवमन्यत्रापि ।

अनादि निधना नित्या वागुत्सृष्टा स्वयंभुवा ॥
आदौ वेदमयी विद्या यतः सर्वाः प्रवृत्तयः ॥

प्रथमं कारणज्ञानं तदनन्तरं कार्यज्ञानं प्रवृत्तीनां चेति । यदव्यक्तकाले ज्ञानं नित्यं तदेव व्यक्तकाले अनित्यदशायां परिणमति । तथाच " नैव वेदाः प्रलीयन्ते महाप्रलयेऽपि " इति वृद्धमेधातिथिः । तथैव—

अग्नि वायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।
दुदोह यज्ञसिध्यर्थं ऋग्यजुःसामलक्षणम् ॥

इति मनुः ।

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥

इति महाभारते ।

एवं मनुव्यासादिमहर्षयः वेदस्य प्रवाहरूपेण नित्यत्वं प्रतिपादयन्ति । एवमेव नावेदविन्मनुते तं वृहन्तम् इति ज्ञानरूपवेदादेवेश्वरसंबंधिज्ञानं भवतीति ब्राह्मणादौ वेदस्य माहात्म्यप्रद-

र्शनात् । यदा ज्ञानस्यानाद्यनन्तत्वमंगीक्रियते तदा तदर्थवाचकवेद-स्यापि सनातनत्वं स्वीकर्तव्यमेव । ननु भवदुक्तवेदग्रंथा अग्न्यादिना भस्मसात् कर्तुं शक्यास्तर्हि कथं तेषां नित्यत्वं प्रतिभाति । इति चेन्न । वयन्तु भवदुक्तरीत्या पत्रादौ मसीत्यादिना लिखितपुस्तकस्यास्थिर-त्वं ज्ञानभांडारं च न मन्यामहे । नच भवन्तमिव प्रमाणपरीक्षणे-भ्रमभ्रंताः संतः वयं भ्रमोदधौ ब्रुडामः । यतः पूज्यपादमहार्षिभिः पुस्तकादीनामनित्यत्वमनुभूय 'ईश्वर प्रेरणया' ह्यात्माहितकरः सर्व-सुखविशिष्टो यो भावः प्रादुर्भूतः स एव ज्ञानं वेदः श्रुतिरित्यादि नामभिर्निर्दिश्य इदं ज्ञानं केवलश्रवणार्हं श्रवणेनैवावबोद्धुं शक्यं ननु लेखादिनेति विभाव्य यद्यद्ज्ञानंतत्सर्वं वेद इत्याकलितोस्ति । तथैतदा ख्यायिकानुसारं ज्ञानप्रतिपादककुराणबाइबलादयोपि वेदान्तर्गता भ-वेयुरातचत् भवतु नाम यदि 'कुराणबाइबला'दयो ज्ञानप्रतिपादका-स्तर्हि तत्रत्यज्ञानमपि वेदात्मकमर्थात् कुराणादिग्रंथेष्वात्मोन्नातिकरो यो विषयो वर्तते तद्वेदादिशास्त्रमधीत्यैव तद्ग्रंथकारास्तस्मिन्नुल्लेखया-मासुरिति कथने न कापि क्षतिरस्माकम् ॥

अतएव 'अनन्ता वै वेदा' इति महर्षीणामुक्तिः । यद्यपि सांख्यादिदर्शनकाराणां सर्वेषां मते जगत्कारणविषये मिथो विप्रति-पत्तिर्भाति तथापि वेदापौरुषेयविषये लेशतोपि न सा विप्रतिपत्तिः कुत्रापि दृश्यते । तथैव—

**प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।**
**यत्तं विदंति वेदेन तस्माद्वेदस्य वेदता ॥**

इति स्मृतिवचनेन "वेदस्य" प्रौढिः सार्वजनिकत्वं च कीदृशोऽस्तीत्यनुमीयते । अतिगंभीरत्वादेव "तद्वचनादाम्नायस्य-प्रामाण्यम्" इति कणादमुनिना मननगम्यवेदस्य प्रामाण्यं प्रकाशितम् । तथैव वेदमंत्राणामर्थाकलनेन जागृता आधुनिकाः पाश्चात्य-पंडिताः गुणग्राहिणश्च मक्समूलर पालडयूसनादयो ज्ञानविज्ञानकुशलाः सन्तः पृथिव्यां वेदेभ्यः प्राचीनतरो ग्रंथः कोपि न सम्भूतो न संभाविष्यतीति स्वकण्ठरवेण घोषयन्ति लिखंति च । तत्र तावद्वेदस्य विलक्षणत्वं भावगाम्भीर्यं पावित्र्यं चानुभूयमानो मक्समूलरः प्राह ।

I maintain that for the study of man, or if you like, for the study of Aryan humânity, there is nothing in the world equal, in importance, to the Vedas. I maintain that to every body who cares for himself, for his ancestors for his history, or for his intellectual development a study of vedic literature is indispensable and that as on element of liberal education it is far more important and for mere improving that the reigns of Bobylonion and Persian Kings, eye even than the dates and deeds of many of the kings of Judan and Isrol.

[ India what can it teach us. ] Page 112.

श्रुतिस्तु ज्ञानविज्ञानयोरधिष्ठनभूतेति । ज्ञानं विज्ञानं चानन्तस्वरूपम् तथापि सामान्यज्ञानं विशेषज्ञानमिति द्विविधमा-

लक्ष्यते । तस्मिन् प्राकृतिकज्ञानमेव सामान्यज्ञानं । अध्यात्मिक-ज्ञानमेव विशेषज्ञानमिति । एवमेव ज्ञानं त्रिविधमिति समालोच्य वेदस्यापि त्रिविधार्थज्ञानप्रतिपादकत्वेनाध्यगीषत प्राचीनाचार्याः । तथा च अध्यात्माधिदैवाधिभूतविषयानुपक्रम्यार्थत्रयेणाकलितो वेदः । यथा श्रीमन्मध्वभाष्ये ।

**त्रयो अर्थाः सर्ववेदेषु इत्येव** मन्यत्रापि ।

समाधिभाषाप्रथमा, लौकिकीतितथापरा । तृतीयापरकीयेति, शास्त्र भाषात्रिधास्मृता ॥ समाधिभाषा जीवानां, योगबुद्धिप्रदायिका । परकीया तथाभाषा, शास्त्रोक्ता पापनाशिनी ॥ इत्येवं भरद्वाज-मुनिराह । " त्रयोअर्थाः सर्व वेदेषु" इत्युपरिनिर्दिष्टाभिरुपपात्तिभिः स्फुटमेवं निश्चीयते । ये न्यबध्नन् निजानि व्याख्यानान्येकार्थमनु-सृत्य तत्तु न समंजसम् । यतस्ते वेदार्थं तद्गतगूढतत्वं चावि जानन्तः सन्तस्त्वेवमलिखन् इति । अथवा स्वोत्कर्षप्रदर्शनार्थं तथा प्रौढार्थं चेति विज्ञेयम् ।

केश्चिदाचार्यैर्ज्ञानं पंचविधमिति परिगणितम्, तद्यथा मति श्रुतावधिमनःपर्यायकेवलविज्ञानमिति । इंद्रियमनसी पुरस्कृत्य यथार्थं मनुते सा मतिः । मतिजनितं ज्ञानं श्रुतम् । वस्तुगुणाव-च्छिन्नविषयज्ञानमवधिः । परमनोगतस्यार्थस्य स्फुटपरिच्छेदकं ज्ञानं मनः पर्यायः । विषयादिज्ञावासंस्पृष्टं तपस्विनो ज्ञानमेव केवलम् ।

एवं वेदा अपि निरवधिज्ञानस्वरूपबोधका इति । अतएव **अनंतावैवेदाः** इति महर्षीणामुक्तिः । वेदे देवर्षीणां यन्नाम प्रतीतिरस्ति तद्विषये केचन वदन्ति । येषां मुनीनां मनसि ये मन्त्रा

प्रथममाविरभवन् तन्मंत्रप्रदर्शिनां महर्षीणामभिधेयान्येव तत्र प्रदर्शितानि तत्सर्वं संगृह्य वेदचतुष्टयं मुनिचतुष्टयेन दर्शितमस्तीति । तन्न, यतोऽनयोक्त्या लोके वेदा अपि निन्दिता बभूवुः । यथा कैश्चिद् भणितमस्ति । तत्तन्नामनिर्दिष्टेभ्यो मुनिभ्यः पूर्वं तत्तन्मन्त्रा नासन्निति । यथा पुत्रोत्पत्यभाव एव आगामिपुत्रस्य ममेदन्नामेति केनापि पित्रा निश्चेतुं न शक्यते । तद्वत्तत्तन्नामानिर्दिष्टैर्महर्षिभिरेव तत्तन्मन्त्राणां प्रगटनस्य संभवः। एवं सति मुनीनां कालनिर्णयस्यापि सुलभत्वात् । अनेन विचारेण तत्तन्मन्त्राणामाधुनिकत्वं संभावयितुं शक्यमेवेति । यदेतत्कथनं तच्चु मन्वादिस्मृतिप्रमाणैः प्रौढाभिर्युक्तिभिश्च निराक्रियते । यथा—

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम् ।**
**दुदोह यज्ञसिध्यर्थं ऋग्यजुः सामलक्षणम् ॥**

यतो मनुना मुनित्रयेण वेदत्रयस्य प्रादुर्भावो जात इति प्रथितम् । यद्येवं नस्यात् तर्हि तत्तदृषीणां तत्तन्नामनिदर्शने मनोर्न कापि हानिरासीत् । यदैवं मनुना तथा नैव लिखितमतोऽनुमीयते सिद्धांतीयतेच । ऋषिचतुष्टयेनैव वेदचतुष्टयस्य प्रादुर्भाव इति । अन्यथा तत्तदृषिप्रतिपादितज्ञानविषये तत्पूर्वजेष्वज्ञत्वदोषापत्तिः तथा जगदांध्यप्रसक्तिरनवस्थादोषप्रसंगश्च । अतो येयं नामलेखन परिपाठी परिदृश्यते सेयमतिनवीना यतः कात्यायनादिमुनिभिर्विनियोजिता । तत्पूर्वं कुत्रापि तन्नामलेखनपद्धतिर्नैव श्रुतिप्रथमारोहति । अतः कात्यायनादिभिः कल्पितेयं कल्पनेति निश्चित्य पूर्व-

प्रदर्शितदोषारोपो निर्मूल इति निश्चियते । अस्मिन् वेदविषये श्रीसायनाचार्यो वेदभाष्यभाषणसमये उपोद्घातप्रकरणे वेदस्यापौरुषेयविषये किं प्रमाणमित्याशंक्य वेदस्य वेदएवप्रमाणमित्यंगीकृत्य न खलु निपुणोपि स्वस्कंधमारोढुंप्रभवेदित्याद्यसाधनीयदोषान् प्रदर्श्याकुण्ठितशक्तेर्वेदस्य न कोपि दोष इति सूचयितुं यथा घटपटादिद्रव्याणां स्वप्रकाशकत्वाभावेऽपि सूर्यस्य स्वप्रकाशत्वमविरुद्धम् । तद्वदकुण्ठितशक्तेर्वेदस्य स्वतः प्रमाणमस्त्येवेति निश्चिनोति ।

परं वेदे विषयर्षिक्रमानुसारिण्यो मन्त्रात्मकसंहितास्त्रिविधा दृश्यन्ते तत्र ऋषिक्रमानुसारिण्यो मन्त्रा बहुशो न दृश्यन्ते एतेषां देवतादीनां रचना कस्मात्कृतेति शतपथादिग्रंथेभ्यो झटित्यवगतिर्भवति ।

वृत्रहन्क्षत्रंवा इन्द्रो विशोमरुतः ।
विशोवैक्षात्रियो बलवान् भवति ॥

श. ब्रा. ४ । ३ । ३ । २

अग्निरेव ब्रह्म इत्यादि श. १० । २
ब्रह्म ब्राह्मणः इत्यादि श. ५ । १ । १

अग्निमेघेंद्रमरुद्ब्रह्मेत्यादिनामधेयैस्तत्तद्देवतानां गुणगतिकर्मणांबोधो भवति । यथा चंद्रइत्युक्तेसति चन्द्रस्य को वा गुणः कस्तेन गुणेन लाभोऽस्माकं तथा भूमण्डलस्य चंद्रेण किं प्रयोजनमस्ति इत्यादिविचारं मनस्यानीय तत्तत्संबंधानां विचारः कर्तव्य

इति । एवमेव अग्न्यादीनामपि गुणगतिकर्माणि योजयेत् । अनया देवतादिकल्पनया वर्णाश्रमधर्म्मस्यापि प्रतीतिस्तथा ब्राह्मणादीनां कर्तव्यकर्मणो बोधो भवति । अर्थात् यदा मंत्रारंभे देवतादीन् पश्यति तदैवायंमन्त्रः एतादृशगुणकर्मणां बोधक इति युगपदर्थं जानाति । अतः पठनपाठनसुलभार्थमेव कात्यायनादिभिः कल्पितेयं पद्धतिरिति निर्णीयते । यतः सर्वे महर्षयः " ऋषयोमन्त्रद्रष्टारोनतुकर्तारः " इत्यनेकशो गर्जयन्ति । तद्यथा यास्कमुनिराह स्वनिर्मितनिरुक्तग्रन्थे ।

" ऋषयो मन्त्र दृष्टयः मन्त्रान् संप्राददुः " इति ।

तथैव—

**यस्माद्दचोअपातक्षन् यजुर्यस्मादपाकषन्**
**सामानि यस्य लोमान्यथर्वांगिरसोमुखम् ।**
**स्कंभंतं ब्रूहि कतमः स्मिदेवसः अथर्व॰ कां.१.**

इत्यादिमंत्रैर्मन्त्रदर्शित्वं कर्तृत्वाभावश्च परमात्मना आदियोगिजनपवित्रहृदयेषु प्रेर्यमाणत्वं च सूच्यते । मन्त्रकर्तृत्वशक्तिस्त्वीश्वरस्यैवेति सिद्धान्तः—

वेदे कृतवर्णनस्य नक्षत्रैकस्याधुना पूर्वस्मात्स्थानात्स्थानान्तरप्रतीतिर्दृश्यते । तस्मात् पूर्वस्थानादपरस्थानगमनाय यावत् कालातिपातो जातस्तावद्गमनानुकूलगणनया यदूह्यते । तदशीतिसहस्त्रवर्षेभ्यः पूर्वं वेदा, प्रादुर्भूता इति । तथैवान्यः त्रिसहस्त्रवर्षेभ्योऽतीतत्वं न मनुते । एते युक्तिवादैः यद्वेदसमयं सिद्धान्तयन्ति

तत्तु कथं त्वया न मन्यत इति चेन्न । एतेषामुक्तिरेव समीचीनेति कथं त्वयापि निश्चीयते । यथैते नक्षत्रस्य स्थानान्तरप्रापणमेव तत्र कालनिर्णयस्य कारणमिति वदन्ति । तथैवेतः पूर्वं पृथिव्या आसमन्तात्तन्नक्षत्रपरिवर्तनं वारैकं वारद्वयं वारत्रयं वा संजातमस्तीति कथंत्वया न विचार्यते । अथवा एतावत्कालपर्यंतमियदेवगमनं कृतमस्तीति कथं निश्चीयते ।

यतः केषांचिन्मते प्रवाहरूपेण पृथिवी नित्याऽस्ति । तन्मतानुसुरेण नक्षत्रपरिवर्तनविषये शतकोटिवर्षाणामपि कल्पना कर्तुं शक्यते । अतएतादृशतर्केण सहस्रकोट्यादिवर्षाणां गणनयापि कार्यभागोनस्यात् तथा अनवस्थादोषापत्तिः । तस्मादीदृशतर्कविशिष्टगणनया तत्र कथमपि निर्वाहो न भवति । यतो गणनाया अवधिर्ज्ञानविज्ञानयोर्नास्ति । अत एकस्मिन् वस्तुनि अवधिनिरवध्योः कथनं कथं संगच्छेत तस्मात् नैवैतादृशानिष्फलसाहसः कार्योऽस्मिन्विषयेऽनुसन्धानशीलिभिः । यद्यपि कैश्चिज्जल्पितं । " अनाढ्यैरारण्यकैर्वेदा निर्मिता इति " परं त एववेदा आढ्यैरेतैर्यथासुलभं कृतार्थाः किं न भवन्ति यथा काव्यनाटकादीनामर्थाः सुलभतयाविष्क्रियंते तद्वदेतैर्निंदकैर्यदा तथा नार्थः क्रियते तदा एते अनाढ्येभ्योप्यनाढ्या अनाकलितवेदतत्वार्था इति कथने न कोपि दोषः ।

यथा बालाः स्थानरूपादिराहिताकाशस्य तलमलिनताद्यारोप्य नीलंनभ इति भणन्ति । तद्वद्वेदार्थविचारे भ्रांताः सन्तः कालं तथा अनाढ्यनिर्मातृत्वादिकं कल्पयन्ति—परं

भूतं भव्यं भविष्यं च सव वेदात्प्रसिद्ध्यति ।
इति मनोरुक्त्कैनैव स्मरंति ।

तथा अनधिगतार्यविद्या असूयपराः पंडितंमन्याश्च वेदशास्त्रं सर्वथाप्यसमंजसतया दर्शयन्तो भारतदशां प्रत्यहमधोधः प्रापयंतीव दरी दृश्यन्ते अहो विचित्रा दैवगतिः परं भारतीया दृष्ट्वाप्यतादृशमहानर्थ मधुनापि नेत्रोन्मीलनं न कुर्वंति । अतः आश्चर्यमश्चर्यं दैवचक्रः कीदृग्बलीयानित्यनेनानुमीयते ।

वेदस्तु आध्यात्मिकाधिदैविकाधिभौतिकरूपेण त्रिविधात्मक इति पूर्वमेवकथितोऽस्ति । तत्र कारणशरीरस्यात्ममनश्चित्ताहंकार-बुध्यादीनां यथार्थज्ञानं तत्क्रिया च अध्यात्मविषयादेव संपद्यते ।

आत्मचित्तबुध्यादीनां यथार्थपरिचयसाधनीभूता येगुणास्तेषां लक्षणानि कृतयश्च सौजन्यवैजन्यादयः सुविकारदुर्विकाराः परस्पर-विरोधोऽव्याप्त्यतिव्याप्त्यादिदोषाः कथं कीदृशं संभवंतीत्यादिनाना-विधं ज्ञानम् तथा सर्वविपयणामाकस्मिकघटनाघटनप्रसंगोपि आधि-दैविकविषयेंऽतर्भवति ।

तथा पृथिव्यप्तेजोवाय्वाकाशविद्युन्मेघवनस्पत्यादयः तत्समष्टि-जनिताः सृष्टिशरीरादयः तेषामुत्पत्तिस्थितिनाशादयस्तथा सूर्य-चन्द्रनक्षत्राद्यखिलब्रह्मांडावृतानां पदार्थानां सर्वविज्ञानं प्रकृतिविज्ञान-प्रतिपादकानि शास्त्राणि सर्वाणि राज्यराजप्रजासंबंधीनि सर्वाणि कार्याणि सर्वो मानवव्यवहारश्चयद्दृश्यते तथाप्राचीनार्वाचीनैर्य-ज्ञयावद्विद्युदादिपरिशोधितम् सर्वमेतत्भौतिकमित्यवगम्यते ।

वेदेष्वपरिनिर्दिष्टत्रिविधात्मकविषया निरूताः सन्ति । वेदा मनुष्याणां शारीरिकमानसिकात्मिकाद्युन्नतिसंपादनस्यसुलभोपाय-प्रदर्शका वर्तंते अत एव वेदेषु आद्यानामृषीणां विशेषतो विश्वासः । तदेतद्वेदरक्षार्थमेव षडंगानि विरचयामासुर्महर्षयः ।

" छंदः पादौतुवेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ।
शिक्षा घ्राणंतु वेदस्य मुखं व्याकरणं स्मृतम् ।
एतान्येव वेदांगानीति कथ्यंते ।

यत्प्रागुक्तं ज्ञानविज्ञानयोरधिष्ठानं वेद इति सोऽयं त्रिविधेना-ध्यात्माधिदैवाधिभूतक्रियारूपेण ज्ञानोपासनकर्माणीति कांडत्रयनाम्ना विभागः कृतोऽस्ति । तदेतत्प्रस्तूयतेऽधुना

यथा दुग्धं च भक्तं च शर्करा च सुमिश्रितम् ।
कल्पितं देवभोगाय परमान्नं सुधोपमम् ।
तथा त्रैविध्यमापन्नः श्रुतिभेदः सुखात्मकः ।
नयते ब्राह्मणान् नित्यं ब्रह्मानन्दं परात्परम् ॥

इति त्रिविधा विद्या वेदेऽस्मिन् यथासौकर्यं यथासुलभं सरहस्यं चातिविस्तृतया विस्तृताऽस्ति ।

# ज्ञानकाण्डविचारः

यद्यपि ज्ञानं बहुविधं तत्सर्वं सत्वरजस्तमोगुणानुसारं त्रिविधात्मकेन संगृहीतं भवति । तत्रैकैकस्य त्रिविधत्वं प्रस्तूयते । तद्यथा सात्विकज्ञानं राजसिकज्ञानं तामसिकज्ञानमिति ।

तथा श्रवणं मननं निदिध्यासनं चेति साधनत्रयं ज्ञानसंपादनार्थं वर्ण्यते केषाञ्चिन्मते ज्ञानस्य पञ्चविधत्वमपिश्रूयते "दर्शनं श्रवणं मननं विज्ञानंसर्वज्ञत्वंचेति" तत्रसूक्ष्मव्यवहितविप्रकृष्टाशेषचाक्षुषस्पर्शादिविषयज्ञानं दर्शनम् शास्त्रद्वारा अथवा गुरुमुखेन यच्छ्रूयते त "च्छ्रवणम्" अशेषशब्दविषयं सिद्धिज्ञानं मननम् निरवशेषशास्त्रविषयं ग्रन्थतोऽर्थतश्च सिद्धिज्ञानं विज्ञानम् । उक्तानुक्ताशेषार्थेषु समासविस्तरविभागविशेषतश्च तत्त्वव्याप्यसदोदितसिद्धिज्ञानमेव सर्वज्ञत्वम् । इत्येषा धीशक्तिः । इतिसर्वदर्शनसंग्रहकारः ।

मननं, मनसोविचारणीयभागः । निदिध्यासनं, मनसि विहिताविहितविचारपूर्वकं यन्निर्णीतं तस्थिरीकरणम् । अथवा विजातीयप्रत्ययतिरस्कारेण सजातीयविषयप्रत्ययप्रवाहीकरणविचारविशेषात्मकदृढभावनैव निदिध्यासनम् । तथैव

**भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितं यदायुः ॥**

इति ऋग्वेदे श्रवणमनननिदिध्यासनक्रिया व्यपदेशेन वर्णितास्सन्ति । तदेतच्छ्रवणादिकं सत्वादिभेदत्रयेणोक्तमस्ति । यथा सात्विकश्रवणं राजसिकश्रवणं तामसिकश्रवणं चेति । अतएव ज्ञानं नवांगमिश्रितमिति भणन्तिज्ज्ञाः । तज्ज्ञानमेव संशयो विपर्यय इति रीतिद्वयेन विचारितमस्ति । अनवधरणात्मकंज्ञानं संशयः । अवधारणात्मकं ज्ञानं विपर्यय, इति तथा यथार्थवस्तुस्वरूपावबोधनमेव ज्ञानमिति ज्ञानस्य व्याख्या कृतास्ति ।

मानाधीनामेयसिद्धिरितिन्यायेन पौरुषाधीना अध्यात्मादिक्रियासिद्धिः । यथा आध्यात्माधिदैवाधिभूतक्रियानिरूपणेन ज्ञानकर्मोपासनसाम्राज्यस्यावाप्तिः । तथैव तदुभयसुखसाधनवान् पुरुषार्थः । स च धर्मार्थकाममोक्षेषु चतुर्विधो विभक्तः ।

मोक्ष एव आध्यात्मिकस्य ज्ञानस्य च फलमिति । तथा कामस्तु आधिदैविकस्योपासनस्य च फलमिति । धर्मार्थौ कर्मणस्त्वाधिभौतिकस्य फलमिति फलितंभवति । परमेतेषां सूत्रबद्धमणिगणा इव परस्परसंबंधोऽस्तीति भाति ।

मुख्यतोवेदे शुद्धबुद्धमुक्तनिरतिशयानन्दसिद्धान्तसिद्धपरमेश्वरस्याऽस्तित्वप्रतिपादनं तथा तस्यस्वतःप्रामाणं स्वतःसिद्धत्वादिलक्षणकथनं च तद्यथा ।

**सपर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम् । कविर्मनीषी परिभूःस्वयंभूर्याथातथ्य-**

तोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः । यजुर्वेदे अ० ४ तेजोऽसि तेजो मयि धेहि वीर्यमसि वीर्यमयि धेहि । बलमसि बलं मयि धेहि इत्येवं यजुर्वेदे अ० १९

न तस्य कार्यं करणञ्चविद्यते, न तत्समश्चाभ्यधिकश्च दृश्यते । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च, श्वेताश्वेतरोपनिषदि उ० अ० ६

तदेतदुपरिनिर्दिष्टवस्तुप्राप्त्यर्थमेव प्रवृत्तिर्निवृत्तिश्चेति मार्गद्वयस्य प्रशंसनम् । तत्र प्रवृत्तिःस्वाभाविकी निवृत्तिरस्वाभाविकीति । प्रवृत्तिरेव संसारः । निवृत्तिरेव मोक्षइति । तथा अन्यत्र "संशयरूपमिथ्याज्ञानमेव संसार" इति व्याख्यायते तल्लक्षणं च अनात्मनि शरीरादावात्मबुद्धिः । तदनुकूलेषु रागः तत्प्रतिकूलेषु द्वेषः आत्मनो अविषयत्वात्तस्यात्मानुकूलप्रतिकुलाः केपि विषया न सन्ति । तथापि मायोपाधिवशादात्मामूढइवाचरति । परं यावद्देहापाधिविशिष्टस्तावद्देहगुणानां प्रादुर्भावोऽस्त्येव । यथा अविद्यावशाद्रागद्वेषेर्ष्यासूर्यादिदोषैर्लिप्तो जीवः सदाप्रतिषिद्धकर्म्माण्याचरति । यथाशरीरेण हिंसास्तेयादीनि तथा वाचा असत्यभाषणादिकं मनसा परानिष्टचिंतनं च समाचरति । सेयमधर्मप्रवाहिका प्रवृत्तिरप्रशस्तेति ।

यथा प्रशस्तरूपाप्रवृत्तिः । परोपकारसदाचारब्रम्हचर्याऽहिंसाऽपरद्रोहादीनि शरीरवागुद्भवानि । सद्विचारसत्यासत्यविवेचनादयो मानसिकाः एते प्रशस्तप्रवृत्तिजाता इति । तस्मिन्प्रवृतिरपि द्विविधा । पापरूपा अधर्मप्रवृत्तिः । आत्ममनोदेहादोनांप्रतिकूलभोगदातृत्वादेव सेयं पापप्रवृत्तिर्दुःखात्मिका । देहात्मादीनां हितानुकूलव्यापारप्रवर्तका पुण्यारूपाप्रवृत्तिः सुखात्मिका । इयमेव पुण्यरूपा प्रवृत्तिर्लोके धर्म इत्युच्यते ।

शास्त्रेपि प्रवृत्तिनिवृत्तिद्वयस्यापि प्रशंसनं परिदृश्यते तद्यथा "सुखाभ्युदयिकंचैवनैःश्रेयसिकमेव च । प्रवृत्तंच निवृत्तंचद्विविधं कर्म वैदिकं । इह चामुत्र वा काम्यं प्रवृत्तं कर्म कीर्त्यते । निष्कामज्ञानपूर्वन्तु निवृत्तमुपदिश्यते । निवृत्तं कर्म संसेव्य देवानामेति साम्यतां । निवृत्तंसेवमानस्तु भूतान्यत्येति पंच वै ॥

अनयोर्मध्ये प्रवृत्तिर्जीवानां पुनःपुनर्जननमरणप्रवाहोत्पादिका भवति । तथा तत्प्रवाहोच्छेदिका निवृत्तिरिति कथ्यते तन्निवृत्तिरेव मुक्तिरित्यभिधीयते । अतएव दुःखनिवृत्या नित्यनिरतिशयसुखव्यक्तिरेव मुक्तिरितिभाट्टादयो मोक्षस्य व्याख्यानं चक्रुः । तथैवैतन्मोक्षलक्षणं यजुर्वेदपिदृश्यते । "परीत्यभूतानि परीत्य लोकान् परीत्यसर्वाः प्रदिशोदिशश्च । उपस्थाय प्रथमजामृतस्यात्मानमभिसंविवेश" इति । परं धीपावित्र्यादीश्वरानुग्रहः तदनुग्रहवशाच्छ्रवणादिक्रमपूर्वकमात्मतत्वसाक्षात्कारो मोक्षो भवतीति सिद्धान्तः । इति मोक्षस्थितिवर्णनम् ।

# अथ आत्ममीमांसा ।

अतति सर्वत्र व्याप्नोतीत्यात्मेति व्युत्पत्या सामान्यत आत्मशब्दस्तूभयसंयोगसंबन्धेन जीवःपरमोवेति विशेषणपूर्वकं संबुध्यते । तद्यथा जीवात्मा परमात्मा इति ।

ननु पंचभूतसमष्टिजन्यं शरीरमेवात्मा उत तद्भिन्न इति चेत् । अस्ति शरीरेन्द्रियाद्यतिरिक्तः शरीरेन्द्रियस्वामी सुख-दुःखादिभोक्तेति । यद्यपि भूतपरिणामरूपशरीरमेवात्मेति देहात्म-वादिशास्त्रं शास्ति ।

यथा शरीरभिन्नमात्मस्वरूपं वस्तु नास्त्येव प्रत्यक्षादिभि-रनुपलंभादिति तन्न । यत एकदा देहे नष्टे पुनरुत्पत्तिप्रसंगा-भावः । तथैव प्राक्तनकर्मसंस्कारवासनाद्यभावात् सर्वे राजानः सुखैश्वर्यभरीताश्च भवितव्याः परं तथा किं न भविष्यन्ति ।

एवं सति सर्वेषांमनुष्याणां देहस्यैकरूपात्वात् भेद-स्यासंभवाच्च कथं कया रीत्या च सैव्यसेवकभावः संपद्येत । यद्येवमुच्यते देहगुणानुगुण्येन भवतीति । तदपि न सर्वेषां शरी-राणि पंचभूतजनितानि सन्ति । परं भवदुक्त्यनुसारं सुकर्म-दुष्कर्माद्यभावात् सृष्टिनियमस्यानवस्थाप्रसंङ्गः । तस्माच्छरीरमेवा-त्मेति कथनं सर्वथाप्यसमंजसम् ।

यतः पदार्थाः क्षणं क्षणं परिवर्तनपरा दृश्यन्ते । तथैव पदार्थानामनित्यताप्यनुभूयते । यथा बुद्बुदसमजीविते पांचभौतिके देहे पंचतां गते सति तद्गतजलाद्यणवश्छिन्नविच्छिन्नत्वेन रूपांतरमा-

प्नुवन्ति । परं च आत्मनोनिर्विकारत्वेन कूटवत्तिष्ठति । अनित्यस्य देहादिप्रपंचस्यायमेवाधिष्ठानो भूत्वा नित्यत्वेन विभुत्वेन वर्तते । " **यथोर्णनाभिः सृजतेगृह्णते च** " इतिश्रुतेः । उर्णनाभिजतुः यथा जालं बहिः प्रसार्य स्वास्मिन्नेव विलीनयति । तद्वत् परमात्मन्येवास्याः पृथिव्याः प्रादुर्भावो विलयश्च भवतीति । तस्मादेकं निरस्तसद्वितीयं ब्रह्मैव सत्यं ब्रह्मेतरत्सर्वमनित्यमिति सिद्धम् । एवं तर्हि देहात्मनोः परस्परगुणविरुद्धत्वाद्देहात्मवादिशास्त्रं गगनकुसुमायितमिति । आत्माभिन्नस्य मिथ्याभूतदेहादेरात्मैकत्वमपारमार्थिकमयथार्थभूतमिति मन्तव्यम् ।

एवं देहेन्द्रियादिभ्यो भिन्न एवात्मेति विचिंत्य भगवान्गौतम आत्मालिंगमाह—" **इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिंगम्** " इति न्यायदर्शने ।

आत्मन एकत्वमनेकत्वं वा । नाद्यः एकस्मिन्नेव समये एकस्मिन्नेव वस्तुनि ज्ञानाज्ञानयोरवस्थितिरसंभवा । यथा सूर्ये सत्यंधकारस्याभावः प्रकाशांधकारयोःसामानाधिकरण्यं कदापि यथा न भवति । तद्वत् बद्धाबद्धयोर्जीवब्रह्मणोरैक्याभावः । यदि ज्ञानाज्ञानयोरेकस्मिन्नेव वस्तुन्यवस्थितिः स्याद्बोध्यबोधकसेव्यसेवकादीनां वृत्तिनिर्मूलनप्रसंगः । तथा ब्रह्मणि जीवत्वारोपेण व्यभिचारादिदोषदूषणाप्तिः । एवमन्यस्मृतस्यान्यस्मरणाभावात् प्रत्यक्षपरिग्रह्यमाणे भेदे आत्मैकत्वं नैव संगतार्थबोधकम् ॥ ( इति द्वैतवादिनः )

न द्वितीयः । प्रतिशरीरं भिन्नभिन्नत्वेन आत्माव्यवस्थितोऽस्तीत्याभासरूपेण प्रतिभाति । यथा वायुरेकः सन्नपि घटपटादौ वायौ प्रविष्टे साति दुर्वासनासंघटितघटप्रविष्टोऽयं वायुर्घटवायुः पटवायुः सुवायुर्दुर्वायुरित्यादिनामभिः खण्डरूपेण च संभाष्यते । एवमात्मन्यपि भिन्नत्वमारोपणमूलकमेव । एवं—

'एक एवहि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' ॥

यथा षोडशकलानिधेरेकस्य समुद्रवीचिषु बिंबं भिन्नभिन्नं दृश्यते । यथा तत्र लहरीक्षोभान्नानात्वं तद्वद्देहबुद्ध्याद्युपाधिवृत्तीनां नानात्वेन प्रतिबिंबितो भूत्वा शुद्धोपि पुरुषोच्छायापतितत्वाद् बुद्धिवृत्तिमनुपश्य तदनुकुर्वन्न तदात्मापि तदात्मक इवात्माप्यनेकधा छिन्नविछिन्नं प्रतिभाति । एवमेव देहविशिष्टो जडोपाधि वशादज्ञभावावृत आत्मा अहं सुखी दुःखीति मन्यते । अर्थाद् एकोप्यात्मोपाधिगतगुणपूर्वकं विकृतिरूपेणानादिमायया भेदं प्राप्नोति । नन्वविद्याजन्यभेदे सति कथमहमीश्वरोभवेयमित्याकांक्षायां मिथ्याभूतो भेद इति निःसंशयं कथ्यते । तथाऽऽत्मनः पारमार्थिकाभेदस्तु न केनापि विरोद्धुं शक्यत इत्येवमात्मैकवादिनः ।
"परं मन्मनः कालानुसंधानपूर्वकं मार्गद्वयमप्यनुसरति"

यथा यावद्देहविशिष्ट आत्मा तावत्सेव्यसेवकभावोऽस्त्येव । अन्यथा गुरुशिष्यभावनाया अभावे बोध्यबोधकभावस्याप्यभावात्

ज्ञानाविर्भावस्याभावः । तथा ज्ञानोत्पत्तेरभावेऽज्ञानाभावस्तज्न्योपाधिविच्छेदोपि च न भवेद् यतो "ज्ञानान्मुक्तिरिति सांख्या वदन्ति ।"

यावत्कालं पुरुषः स्वस्थित्यनभिज्ञस्तावत् सेवक एव यदा स्वात्मज्ञो भवति तदा स एव गुरुर्भवति अज्ञसमय एव भिन्नत्तज्ज्ञसमये त्वेकाकारत्वं संदृश्यते । एवं मुक्तदशायां विगतजीवादिभेदभाव आत्मा भवतीति स्थिरीक्रियते ।

ननु केचन आत्मा अकर्ता कर्तृत्वशून्यः केचन उपाधिविशिष्ट इति निरूपयन्ति । परं यद्यात्मा कर्तृत्वशक्त्यादिरहितस्तर्हि तस्येश्वरस्याराधनेन संसारनिरासः कथं स्याद् यदीश्वरः कर्तेत्युच्येत तस्यापि चेष्टावत्त्वं प्राप्नोति । अत एवं निर्णीयत उभयस्माद्विलक्षण ईश्वर इति ।

एवं सति मूलप्रकृतेर्विस्तारः कथं स्यादिति जिज्ञासायामीश्वरेक्षणेन प्रेरिताया मायायाः सृष्टेर्विस्तीर्णता भवतीति ज्ञेयम् तथा नतूपाधिविशिष्टकर्तृत्वं सिसृक्षादिकं चेश्वरस्यास्ति । अर्थाद् विश्वसाक्षिणः परमात्मन ईक्षणमात्रेणेरिता माया एतादृशभव्यब्रम्हाण्डं प्रपंचयति ।

नन्वचेतना मायेक्षणेरिता जगत्कर्त्री कथं भवेदिति विविच्यमाने सति यथाऽयः स्वभावेन यद्यपि चेतनाशून्यं तथापि लोहचुम्बकसान्निध्याच्चलायमानं भवति तद्वदनाद्यनन्ताऽनिर्वचनीया जडरूपा माया विश्वेक्षितुरीक्षणेरिता भुवनानि निर्माति ।

एभिर्विचारजातैः पूर्वारोपितदोषद्वयं नोस्त्वीश्वर इति सिद्धम्। नन्वीश्वरः सर्वव्यापी विभुरित्यादिशब्दैस्त्वयावगीतः। तत्र किं प्रमाणं यतः प्रमाणेन वस्तुसिद्धिस्तद्व्यतिरेकेण किंचिद्वस्तु न सिध्यतीति न्यायविदां मतमितिचेदवधार्यतां श्रुत्युक्तिः।

'अंतर्मही बृहती रोदसी मे विश्वाते धाम वरुप्रियाणि' ऋग्वेदे० अ० ७

'तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चंद्रमाः। तदेव शुक्रं तद्ब्रह्म ता आपः स प्रजापतिः'॥

यजुर्वेदे. अ० ३२

'यो भूतश्च भव्यं च सर्वं यश्चाधितिष्ठति स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः'।

अथर्वणे अ० १०

'यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं ततो न विचिकित्सति॥ यस्मिन्सर्वाणिभूतान्यात्मन्येवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः'। ईशावास्योपनिषदि।

'प्राणाय नमो यस्य सर्वमिदं वशे। यो भूतःसर्वस्येश्वरो यस्मिन्सर्वं प्रतिष्ठितम्'॥ अथर्ववेदे

'एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ नित्योऽनित्यानां चेतनश्चेतनानामेकोबहूनां यो विदधाति कामान्। तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिःशाश्वती नेतरेषाम् '। कठोपनिषदि ।

'न तत्र सूर्यो भाति न चन्द्रतारका नेमा विद्युतो भान्ति कुतोयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ' ॥ कठोपनिषदि

यथा मया पूर्वमीश्वरस्य लक्षणं निर्दिष्टं तथैव तद्गुणप्रदर्शका मंत्रा अपि निर्दिष्टाः परं विस्तरभयाद्विरमामि सद्यः—

यथा वेदस्य यथार्थानभिज्ञः कश्चित्पाश्चात्य पंडितः प्राह ।

**' हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम '।**

इति मंत्रेऽस्मिन् हिरण्यगर्भशब्दः सुवर्णवाचकः । सुवर्णज्ञानमार्यावर्तदेशीयानां त्रिसहस्रवर्षेभ्यः पूर्वं नासीदिति । यतस्त्रिसहस्रवर्षपूर्वमासीदार्यावर्तीयानां सुवर्णज्ञानमित्यास्मिन्विषये न कुत्राप्युल्लेखो लभ्यतेऽतोऽनुमीयते । यदेदं सुवर्णमिति धातुज्ञानमभवत् तदा तद्धातोर्मृदुत्वादिगुणं परिशील्य तद्विषयकस्तुतिं वेदे विरचयामासु-

रिति । अतो मंत्रोत्पत्तिस्त्रिहस्त्रवर्षं नोल्लंघयति । तस्मात्रिसहस्र-वर्षादितः प्रादुर्भूतोऽयं मंत्र इति मंत्रस्य समयनिर्णयं त्रिसहस्त्रवर्ष-पूर्वजेष्वज्ञदोषारोपं च प्रकटयति । परमनेनोक्तिमात्रेण केनापि वेदवादिना वेदशास्त्रमलक्षणमिति न मंतव्यम् । यतो मंत्रास्त्रि-विधार्थबोधका इति प्रागेव प्रपंचितमस्माभिः । अतः प्रथमोऽर्थस्तु हिरण्यशब्दः सुवर्णवाचक इति मत्वा तद्दातारं पर्वतं बोधयत्वा-धिभौतिकार्थानुसारेण । द्वितीयार्थस्तु हिरण्यशब्दः रुक्मकांतिरर्था-त्तेजोवाचकोऽस्ति । हिरण्यं तेज एव गर्भे यस्य स तेजोमूर्तिरेव हिरण्यगर्भ इति यदा मंत्रोऽयं सूर्यवाचको भवति । तदा पाश्चात्य-विद्वान् प्रथमतः सूर्योत्पत्तिसमयं निर्णीय तदनंतरं मंत्रस्यास्य समयं-निर्णेतुं शक्नुयात् तृतीयोऽर्थः हिरण्यशब्दः प्रकाशवाचक इति निरुक्ताभिहितार्थेन हिरण्यं ज्ञानरूपप्रकाश एव गर्भोयस्यसः पर-मात्मेति " तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " इति श्रुतिवाक्येन सर्वप्रकाशप्रेरितारं स्वप्रकाशरूपं परमात्मानं प्रत्यर्थोयदा क्रियते । तदा प्रथमतः परमेश्वरोत्पत्तिमर्था-दात्मोत्पत्तिसमयं निश्चित्यनंतरं मंत्रसमयं निर्णयन्त्विति ब्रूमः । तस्मान्निष्फलोऽयं तेषां साहस इति मत्वा त्रिविधार्थेन वेदार्थज्ञानाविवेचनस्य ऋष्युपदेशपरंपरया प्राप्तत्वाद् वेदः कालग-णनारहितोऽपौरुषेय इति यदुक्तं तत्सर्वथा सर्वैः सर्वदा हृदि दृढीकर्तव्यमिति निवेदयामः ॥

## उपासनाविधिः

आत्मविषये यः सगुणनिर्गुणभेदः क्रियते स तु उपासकानुविध्यर्थम् । यथा योगसिद्धपुरुषाणां निराकारे निर्विषये निरालम्बे निर्गुणे च मनसः प्रवृत्तिर्भवति । तद्वत् तदितरसामान्यनराणामसंभववत्वात् तेषां प्रथमतः साकारे प्रवृत्तिः सुलभा भूत्वा साकारस्मरणध्याननिश्चयानन्तरं यथासुखं निराकारे मनसः प्रवेशो भवति । यथा कश्चिदनधिगतधनुर्विद्यः शस्त्रपाणिः सन् आदौ स्थूलं नारिकेलादिफलं प्रथमवार एव लक्षीकर्तुं यद्यसमर्थो भवति, तथापि कृतप्रयत्नः सन् कालान्तरेऽभ्यासपरिपाकवशादतिसूक्ष्महस्तान्तरनिहितधान्यमपि लक्षीकरोति । एवं साकारोपासनेनेश्वरैकदृढभावनया तदाकारवृत्तिः सन् मनोनैश्चल्येन निराकारमुपासितुं समर्थो भवति । केचनाऽस्य विरुद्धं विवदन्ति । परं च मन्मनोदेवता नैव तेषामनुकूला यतस्तेषां विचारस्तु जडपदार्थे निहितबुद्धिरतिजड एव भवतीति । परं नैवं भावनीयं । यत उपासकास्तु पाषाणमेवेश्वर इति मत्वा पाषाणबुद्ध्या तमीश्वरन्न पूजयन्ति किन्तु पाषाणगते सर्वव्यापिनीश्वरे बुद्धिं संयोज्य पाषाणांर्गतमीश्वरं तद्भावं च प्रतिजानंति अतस्तेषां बुद्धिः पाषाणबुद्धिर्भवितुं कदापिसंभवोनास्ति " यादृशी भावना यस्य सिद्धिर्भवति तादृशी "

इति सिद्धान्तनिश्चयत्वात्तेषां पाषाणांतर्गतपाषाणान्तरव्यापिनि जगदीश्वर एव मनसःस्थिरीकरणशीलत्वात् तेषां बुद्धिरीश्वराकारेणैव परि त्रीयत इति निश्चयः ।

ज्ञानकाण्डबोधिकां मोक्षस्थितिमवतीर्याधुना उपासनारूपकामविधिर्विधीयते। यद्यपि तदन्तर्गता बहुविधा भेदाः सन्ति। तत्र ब्रह्मोपासनाविग्रहोपासना ऋषिदेवताद्युपासना सर्वत्र सर्वप्राणिमात्रादिषु प्रेमोपासना चैतासां लययोगमन्त्रयोगहठयोगराजयोगैर्यथाक्रममुपासनानां सिद्धिर्भवति। तासु प्रत्येकं सत्वरजस्तमोगुणानुसारं त्रिविधमिति विज्ञेयम्।

काम्यते इति कामः वासना इच्छा प्रीतिः इत्यर्थबोधकोऽयं कामशब्दः उपासनाक्रियाया लक्षणद्योतक इत्यभिप्रेत्य विचार्यते, यथा उपासना (कामरूपेच्छा) प्राबल्येन सर्वसिद्धिर्भवतीत्यनुभूयते तथैव लोकानुवादोपि वर्तते। "इच्छा बलीयसी" इत्येवमुपासनाविज्ञानबलेन विषयवासनायां नष्टायां सत्यांपरमात्मनिष्ठपुरुषः स्वयाथात्मानुभवानुगुणनिरवधिकानन्तरूपं निजानन्दमनुभवतीति।

लोके धर्मार्थौ कर्मकाण्डेनाविष्क्रियेते। तत्रादौ अर्थविषयो लिख्यते। अर्थस्याङ्गभूता दानादिक्रियाः। सर्वेदेहात्महितकरं उपभोगसाधनभूतं यत्क्रियमाणं कर्म तदखिलमर्थशब्देनोच्यते। अतएव यज्ञधर्मोपि त्रिधा द्रक्ष्यते। यज्ञशब्दोपि अर्थक्रियांतर्गतः कर्मयज्ञोपासनायज्ञज्ञानयज्ञा इति। तत्र कर्मयज्ञ एव सेवाधर्मप्रवर्तकः कर्मयज्ञस्यावान्तरभेदाः कर्मविज्ञानं संस्कारविज्ञानं सृष्टिविज्ञानम्। इत्येवं कर्मकांडविषयः पूर्वमीमांसादौ विशेषतो वर्णितःऽस्ति। "कर्मणा जायते जंतुः कर्मणैव प्रलीयते" इतिकर्मकाण्डस्य

जगद्व्यापकत्वात् सर्वं तत्रावांतरितत्वादतिविततम् । तथा सृष्टिक्रियादिसर्वस्य कर्ममूलकत्वात् तद्विचारस्त्वतिविस्तृतस्तथैव श्रीमद्भिर्मध्वाचार्यैरपि—

"सर्वेवेदा अंतर्यागपरा बहिर्यागपराश्च" इति स्पष्टमेव निगदितमस्ति यथा अर्थधर्मौ भूताक्रियाद्योतकौ तथा भौतिकान्तर्गतौ । अतः कर्मापि धर्मान्तर्गतम् । तत्कर्मानुसारमेतच्छरीरं प्रकृतिजं तस्मात्सर्वोऽपि प्राणिवर्गः प्रकृतिजैः सत्वरजस्तमो गुणैः परिवर्तमानो द्रव्यवासनागुणवासनाकर्मवासना जातिवासनारागद्वेषादिवासनाभिश्चां प्रेर्यमाणः स्वयमवशो नानाव्यापाररूपं कर्म कुर्वन्नस्वतन्त्र इवाभासते । यतो वासना त्मिकायाः प्रकृतेर्वशीभूत्वा बन्धमोक्षयोर्गतिं स्वाधिकारं चाविज्ञाय संस्कारजप्रवृत्तेः जायमानक्रियाया निःशेषत्यागाद्वृत्तेरालम्बनाभावाच्च कार्याकार्यविवेकरहितो दुरहंकारेण विमूढः सन्न् आमुष्मिकार्थमप्यैहिकार्थमपि वा स्वस्वकर्तव्यं कर्म परित्यज्य तत्रैव प्रकृतावाभ्रममाणस्तिष्ठति । यथानद्याश्चक्रबिंबेपतितपुष्पं चक्रवद्भ्रमति । तथा च तत्रैव भ्रुडभ्रुडायमानस्तिष्ठति । एवमात्माप्रकृति वशगःसन् जननमरणप्रवाहे पतित्वा मुहुर्मुहुर्निमज्जन्नुन्मज्जन्निरन्तरदुःखेन क्लिश्नाति ।

अतएव मन्युष्यो विहितानि कर्माण्यनुष्ठाय तेन प्राप्तचित्त शुद्धयाऽऽत्मा ज्ञानमपरोक्षलक्षणं संपाद्यात्मानं दुःखसागरादुद्धरेदिति

तथैव उद्धरेदात्मनम् इतिभगवद्वचनादात्मनः सुखार्थं विहित कर्म आत्मभावनायाचरणीयमेव।

## 'ननु कर्मणा बध्यते जंतुर्विद्यया च विमुच्यते'।

इति कर्मभिर्बंधत्वस्मरणात् तत्संस्कारोच्छेदनं कर्मणैव कथं स्यादिति चेन्न विचक्षणः कर्मफलाभिसंधिरहितो भूत्वा कर्मफलेष्व नासक्तः संश्चक्षुरादींद्रियाणि रागद्वेषादिभिरगोचराणि कृत्वा अंतर्नियम्याहं दुःखसागरात्तरिष्यामीति बुद्ध्या कर्म कर्तुंप्रारभेदिति। अतएव

## 'कुर्वन्नेवेह कर्माणि जीजिविषेच्छतं समाः'।

इति श्रुतिराज्ञापयति।

अकृते कर्मण्यसंख्यदोषाणामापत्तिः यतस्तत्र सृष्टेस्तावन्नियमरूपत्वात् तदक्रमेण न प्रथमः प्रत्यवायः दुर्योनिस्तृतायः इहपरदुर्भोगश्चतुर्थः पंचमो मोक्षाभावश्चेत्यादिदोषदूषणं प्रसंगान् नित्यकर्मानुष्ठानमेव ज्याय इत्युपचर्यते मनीषिभिः। किन्तु 'शरीरमाद्यं खलु धर्मसाधनम्' इति वचनान्मया शरीरपरित्राणं यावता सिध्येत्तावदेव कर्म क्रियते न तदतिरिक्तमिति चेन्न। यतः शरीरपरिकल्पनमात्मोन्नत्यर्थम्। शरीरशुद्ध्या चित्तशुद्धिः चित्तशुद्ध्या आत्मसाक्षात्कार अतश्चित्तशुद्ध्यर्थं शरीरसंरक्षणार्थं च कर्म कर्तव्यमेव। यस्माद्द्वयोरप्यात्मोन्नतेः प्रयोजकत्वात् यस्या

दृश्य लोकेप्यनुभूयते द्वयोरपि परस्परसम्बंधः यथा कश्चित्-शरीरदुःखपीडितः अर्थाद् रोगग्रस्तः कामपि मानसिकक्रियां कर्तुं न शक्नोति । यद्यपि तत्र तद्दुःख सम्बंधो नास्ति । तथापि मन शरीरयोरतीव सम्बंधात् तद्दुःखारोपस्तत्र भवति । अतएव मनोप्यहं सुखि दुःखीत्यभिमन्यते । उपाधिगतगुणपूर्वकम् । तथा चित्तंदेहस्यचालकम् । यथा यः कोपि परीक्षायामनुत्तीर्णो विव्हल-चित्तःसन् किमपि शारीरिकं कर्म न करोति । यद्यपि तत्र तद्दुःख-विषये शरीरसंबंधो नास्ति तथापि चित्तशरीरयोरतीव संबंधात्त-दनुपूर्वं भौतिकशरीरमपि शिथिलायते । अतस्तयोः परस्परहितार्थं कर्मकर्तव्यमेवेति सिद्धम् ।

एवमेवैतयोःसंबन्धं श्रुतिरप्यभिस्तौति ' यन्मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति' इति शरीरादीनां प्रवृत्तेर्मनोव्यापार-पूर्वकत्वात् । यद्यपि जननविकाराः कर्तृत्वभोक्तृत्वसुखित्वदुःखि-त्वादिधर्मा जागृदाद्यवस्था विशेषाश्च सर्वे प्रकृतेरेव वर्तंते । तथापि अश्वपुरुषयोरसंबन्धेप्यश्वमारुह्य गच्छतो राज्ञोऽश्वकर्तृकगमनाक्रियाऽ भावेप्यश्वप्रेरणारूपक्रियासम्बन्धोऽस्त्येव । तद्वदत्र मनसः स्वाश्रय-क्रियावत्वसम्बन्धो वर्तते । यथा नानावर्णविशिष्टकुसुमसान्निध्यात् स्फटिकेनानावर्णानां प्रतिभा प्रतीयते । तथा प्रकृतिप्रभवाणि सर्व-कर्माणि न आवर्तयन्ति । चुम्बकसांनिध्यादयश्चलायमान यथा दृश्यते । तद्वैव मनसः सानिध्यान्मनसा प्रेरितानि शरीरेंद्रियादया-दीनि कर्मकारकाणि भवन्ति । अतस्तयोरुभयान्वयः सूत्रमणिगणव-

द्वर्तते । अतएव मनसः प्रेरणया कर्मरूपिणीं प्रकृतिमुपलभ्यात्मना कर्मानुसारं इष्टानिष्टे च संपाद्य सुखदुःखे चानुभवति ।

परं च शरीरेन्द्रियादिभ्यो भिन्नत्वनिर्विकारत्वचिद्रूपत्वादिलक्षण-विशिष्टवस्तुसूचकं ज्ञानं तद्विपरीतमज्ञानं तदज्ञानावृतत्वेन प्रकृतिप्र-भवाणि कर्माण्याचर्यंते जीवात्मना । यथा राहू रविबिम्बमाक्रमति तद्वज्ज्ञानमज्ञानेनाक्रांतमस्त्यस्मिन् जीवात्मनि । तथैव भगवद्गीतायां

**'अज्ञानेनावृतं ज्ञानं मुह्यंति जंतवः' ॥(अ. ५)।**

अतएवाज्ञानावृतजंतवो जगत्यत्रोनिर्दिष्टात्मतत्वार्थं ज्ञातुमकृत-प्रयत्नास्तमजानन्तः सन्तः पुनःपुनःसंसारे संसरन्ति । तस्माज्ज्ञानमा वरणरहितं कृत्वा तदेव तत्सर्वं ब्रह्माण्डे चराचरं वस्तुजातं स्वतेजसा भासयन्तं सूर्यमिवं मनःशरीरादिकं सर्वं दृश्यजातं स्वात्मभासा प्रकाशयतः सर्वसाक्षिणो नित्यशुद्धबुद्धमुक्तस्वभावस्यासंगस्यानन्द-परमात्मने निरतिशयानंदसुखार्थमेव तदेतत्सर्वप्रयत्न इति निश्चित्य तत्प्राप्तौ सर्वप्राप्तिर्भवतीति मत्वा **'सर्वाधिपत्यं कुरुते महात्मा'** इति वचनेन कृतसाक्षात्कारपुरुषः सर्वस्वाधीनंकृत्वैहिकामुष्मिकसुख-संपन्नो भवेदिति ।

तथा तदेतज्ज्ञानाज्ञानयोरधिष्ठानभूतं अथवा मूलकारणभूतम नएवेति मतिमतां मतिस्तद्यथा । **' मनएव मनुष्याणां कारणं बन्धमोक्षयोः'** । इत्यादिवाक्यैः सर्वं चित्ताधीनमिति गम्यते । अतएवास्मिन्मनसि बंधनस्य कारणभूता ये रागद्वेषादि-गुणाः सन्ति तेषां संसर्गाभावस्तथा विषयेषु प्रवृत्तिनिरोधनमेव

बन्धनोच्छेदोपाय इति । यथा तन्तुष्वसत्सु पटो नैव सृज्यत असत्यां मृदि घटो नैव संपद्यते च । तथैव रागद्वेषावसंतौ चित्तस्याक्षोभो कदापि न भवति । यतः 'कारणाभावे कार्यभाव' इत्येवं वैशेषिकशास्त्रकर्ता कणादः सूत्रं सूत्रयति । अतः कारण गुणपूर्वकः कार्यो दृष्टः इति न्यायेन रागद्वेषादिपूर्वकमेव मनसि दुर्विकारादीनामुत्पत्तिः । ततो धीमान् रागद्वेषदंभलोभादिष्वनासक्तः सन् निर्दग्धाशेषवासनाग्रन्थिः क्लेशादिष्वसंयुक्तान्तःकरणो निःशेषनिवृत्तविपरीतभावोऽवगतदेशकालापात्रावस्थस्वरूपः सन् भ्रमप्रमादादिजनितवैगुण्याभावपूर्वकं त्रिगुणात्मकेन मनसा सत्वभावमेवांगीकृत्य सुखी भवेत् । यतो मनसः सात्विकत्वं अर्थात्तन्निरोधनं सुकर्मसुप्रेरणं च सुविहितमिति पूर्वाचार्यैर्नियमितमस्ति । यथास्मृतौ

**'मनसश्चेन्द्रियाणांचैकाग्र्यं परमं तपः तज्जायः सर्वं धर्मेभ्यः स धर्मः पर उच्यते' ।**

एवं भगवान् बुद्धोपि पालिभाषायां स्वविरचित धम्मपदे मनोनिग्रह एव श्रेष्ठतरस्तथा तन्मनोनिग्रही एव महायोद्धेति च स्तौति । यथा

**'यो सहस्सं सहस्सेन संग्रामे मानुसेजिने ।**
**एकं च जेष्यमत्तानं सवै संग्रामजुत्तमः' ॥**

सर्वस्यैतस्यैवं श्लेषार्थो भवति । विषयभोगवासनाग्रस्तस्य विषयध्यानश्रवणदर्शनादौ सुतरां प्रवृत्तेर्निरोध एव मनोनिग्रहः । निगृहीतस्य मनसे निःशेषरागत्यागे वैराग्योत्पत्तिश्च भवति । तेन वैराग्येण रागद्वेषलोभमोहगर्वहटकाठिन्यादिमसानां क्षालनं कृत्वा निर्गताशेषकल्मषमन् मुक्तोभवेदिति ।

---

श्रीः ।

# शास्त्रबोधे द्वितीयो भागः ।

## अथ यज्ञादिधर्माः ।

तत्रादौ यज्ञधर्मः समालोच्यते ।

यज्ञविषयोऽयं पूर्वापरविरोधपुरस्परं विचित्रघटनाजालपूर्वकं पौराणिकैरन्यैश्च व्याख्यायते । यद्यपि सर्वे वेदाभिधानमुदाहृत्यैव स्वस्वाविषयान् प्रतिपादयंति । तथापि तेष्वेव केचन हठवशादज्ञभावाद्वाख्यायिकां विरचय्य विचित्रघटनोपक्रमैः स्वाभिमतं प्रदर्श्य वाचकानां मनांस्याश्चर्येणोद्दीपयंति । यथा पशुमारणाद्यत्याचारयुतां हिंसां तत्प्रचारं चाभिमन्यमाना आर्षग्रंथेष्वेव तद्विषयकप्रमाणानि प्रदर्शयंतो मांसाहारप्रियाणां हृदयाण्याह्लादयंति । एते जिह्वारसास्वादनसमुत्पन्नरता अनधिगतशास्त्रीयवाक्यार्थाः स्वेच्छया यथोदाहरंति शास्त्रीयवाक्यानि ।

**" वायव्यं पशुमालभेत भूतिकामः । अजामालभेत । अतिथये वत्सरी मडमडायिता ॥ "**

अजापुत्रं दद्यादित्याद्यनेकवाक्यानि वैदिककर्मसु विधिविहितहिंसां अहिंसामितिबोधयंतीत्युपदिशंतः साविधियेथा

कथंचिद्वा अस्तु । न सा पापोत्पत्तिहेतुः किंतु पुण्या स्वाभीष्ट-फलप्रदेति न तैंस्तत्र पूर्वापरविचारोऽपि क्रियते । प्रत्युत विचारकरणमेव दोषजनकमिति भण्यते । " हाधिक् कष्टमेतत् केषां दोषः केषामुपरि ! "

वस्तुतो मांसाहारप्रचारविषयस्यास्य तत्थ्यमेवं संपन्नं भवति । यदा भरतखंडे यवनानां पादाक्रांतिरभवत् । तद्दिनादारभ्य वैदिका मांसाहारापेक्षिणः समभवन्नित्यूह्यते । यतो यवनास्तु मांसप्रिया " यथा राजा तथा प्रजा " इति न्यायेन राष्ट्रशासन-समये मांसाशिन एव तेषां प्रियकरा आसन् । नत्वेतावदेव बला-त्कारेणापि मांसाहारं चोदयंतिस्मेति । तथा अनपेक्षितमांसाहार-पुरुषः क्रूरशासनैः शिक्षयामासुरिति किंवदंत्यद्यापि श्रूयते । यथा

देवासराज्यांतर्गतभूवनादिसंपन्नौदुंबरा वैदिका मोगलसा-म्राज्यसमयेऽस्वीकृतमहम्मदीयधर्मा यदा समभवन् तदा महम्मदा-नुयायिना साम्राज्यपतिनोक्तं । यदि भवंतो मद्धर्मावलंबिनो न भवेयुस्तर्हि युष्मान् निरस्तसमस्तभूभागान् करिष्यामीति । तदा तेष्वेको राजनीतिज्ञः कुटिलब्राह्मणस्तत्क्षणे तद्धर्मानुयायी भूत्वा लब्धभूभागोऽभवत् । कतिपयदिनानंतरं मोगलसाम्राज्यं लुप्तप्रायं दृष्ट्वा पुनस्तद्वंशजा वैदिका जाता इति । एवमनेकोदाहरणानि लभ्यंते । यद्यपि वेदेषु अजाछागलादिशब्दाः परि-दृश्यंते । परं तच्छाब्दार्थानुकरणे तदर्थभावाकलने भ्रांताः संतः वेदोक्तछागलादिशब्दान् पशुदिष्वारोपयंति । नैतद्विहितम् । यतः

प्राचीनाः पुरोडाशव्यपदेशेन अजो न घ्नंतिस्म । किंतु पुरोडाशशब्दस्य व्रीहिमयत्वप्रतिपादनात् ब्राह्मणग्रंथेषु छागलादिशब्दानां धान्यवाचकत्वकथनात् यज्ञे धान्यस्यैव प्रयोजनत्वात् छागलादिशब्दा धान्यवाचका इति मंतव्यम्।

" पशवो वै अन्नम्। " तथा

" आयुषेत्वा वर्जसेत्वा कृष्यैत्वा क्षेमायत्व इत्येते चत्वारः। चतुष्पादाः पशवः अन्नं पशवः एतैश्चतुर्भिश्चतुष्पादैः पशुभिरेतेन अन्नेन अमुष्मिन् लोके प्रत्यातिष्ठन् । तथैव एतद्यजमानः एतैश्चतुर्भिश्चतुष्पादैः पशुभिः एतेन अन्नेन अमुष्मिन् लोके प्रतितिष्ठति। ईषेत्वा ऊर्जेत्वा रय्यैत्वा पोषयित्वा इति चत्वारः चतुष्पादाः पशवः अन्नं वै पशवः ते ( देवाः ) एतैश्चतुर्भिश्चतुष्पादैः पशुभिः एतेन अन्नेन अस्मिन् लोके प्रत्यातिष्ठन् । तथैव यजमानः प्रतितिष्ठति।

इत्यादि वाक्यैरजादिशब्दानां धान्यवाचकत्वव्याख्यानात् गवादिपशूनां स्तुतिपोषणादिप्रदर्शनात् ' अजैर्यष्टव्यम् ' इत्यादि वाक्येषु व्रीहयस्तु सर्षपा वार्षिका इति कथ्यंते । न कदापि पशुविशेषा इति निश्चित्य यज्ञकार्येषु सर्वदा धान्यैरेव व्यवहारः कार्यः । एवं तर्हि पशुशब्दस्यान्नव्याख्यानं कथं संगच्छत इतिचेत् श्रूयताम् । धातूनामनेकार्थत्वात् यज्ञे अन्नादिपदार्थानामेव प्रभूतसहकारित्वात् यज्ञेष्वन्नाद्युत्पत्तेः साधनत्वात् अन्नं जीवनस्य मुख्यहेतुत्वात्।

यज्ञेन यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन् । तेहनाकं महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः ।

इत्यादि मंत्रैरपि यज्ञस्य धर्मांगप्रतिपादनात् यज्ञकर्तुंरायुराद्यभिवृद्धिकथनात् कथमिव चतुष्पादपशूनां हिंसनं धर्मरक्षार्थं क्षेमादिलाभार्थं च प्रभवेत् । अत एव पशुशब्दस्यान्नव्याख्यानमेव समंजसं मतिमतां मनोरंजकं चेति विश्वस्यास्य प्रतिकूलव्याख्यानमसंगतंचेति ब्रवीमि ।

वेदादिशास्त्रेषु गवादिपशूनां स्तुतिः सर्वत्र परिदृश्यते । यथा

यूयं गावो भेदयथा
कृशांचिदश्रीरं चित् कृणुमासु प्रतीकम् ॥
भद्रं गृहं कृणुथ भद्रं वचो बृहद्वे उच्यते
सभासु ॥ अथर्वे॰ का॰ ४ अ. ५

मंत्राणामर्थाकलने भ्रामिष्ठा वेदार्थं परस्परविरोधपूर्वकं कल्पयंतो वेदे कुदृष्टिं प्रक्षिपंतो नास्तिकचार्वाकादयस्तथा स्याद्वादमंजरिकर्ता जल्पति विधिनिराकृतहिंसासक्तवैदिकं मन्येषु ब्राह्मणेषु ।

वृक्षांश्छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम् ।
यद्येवं गम्यते स्वर्गे नरके केन गम्यते ॥

इत्याद्यपहासविषये घृणास्पदां व्रीडां विना नान्या समाहितिः । तथत्र हिंसादिदुष्टकृतिभिर्मानववृत्तेर्महाननर्थः । मनुष्यस्य स्वाभाविकं दयाघनविशिष्टं कोमलहृदयमपि प्रत्यहं हिंसाग्रतया कठिनतरां दयारहितवृत्तिं प्राप्नोति । एवं लोकेऽनुभवोऽपि दृश्यते । यथा कटकः सर्वदा छागादिपशून् हिंसयन् ( मारयन् ) नितरां निर्दयो भूत्वा मातापितृगुरुंश्चापि तिरस्करोति । एवमहिंसाधर्मप्रेरितपुरुषः कदाप्येतादृशानिष्टकार्यं कर्तुं न प्रवर्तेत । नत्वेतावदेव किंतु झटिति तस्य मनसि घृणापि जायेदेव ।

हाधिक्कष्टं अनधिगतवेदार्थेन भारतीयानां पुण्यतीर्थेषु मंदिरेषु चाद्यावधि प्रतिदिनं प्रतिमासं प्रतिवर्षं चासंख्यका निरपराधानिरुपद्रवाश्च पशवो वध्यंते कालगतिरियम् । इतोऽपि सर्वमानवा इमा अमानुष्यो मानवीसुवृत्तिबाधकाः क्रियाः सर्वथा संत्यज्य सर्वत्राहिंसापरधर्ममेवानुष्ठेयुरित्याशासे ।

## पंचमहायज्ञाः ।

वेदे ब्रह्मदेवपितृभूतनृयज्ञा इति पंचमहायज्ञानां वर्णनं परिदृश्यते । एते पंचमहायज्ञाः सायनाद्याचार्यैर्भिन्नभिन्नरीत्या व्याख्याताः। परमधुनैते वेदप्रमाणमंगीकृत्य मन्मतानुसारं व्याख्यायंते । तत्रादौ

### ब्रह्मयज्ञः ।

ब्रह्म+इति वेदः । अथवा साक्षाद्ब्रह्म तदनुष्ठानार्थं वेदवेदांगादिसत्यशास्त्राणां पठनपाठनादिपरिशीलनमथवा केनाप्युपायेन तदनुसंधानमेव ब्रह्मयज्ञ इति अर्थात् ब्रह्मणोवेदाविद्यायाः परमात्मनो

वा यजनं सेवा प्राप्तिश्च यया क्रियया संपद्यते । अथवा परमात्मानं वेदं च येन कर्मणा यजति सेवयति प्राप्नोति तत्स्वाध्यायमेव ब्रह्मयज्ञ इति । यतोऽपौरुषेया ब्रह्मप्रादुर्भूता वेदास्तथा वेदप्रतिपादकं ब्रह्म । एवं तयोः परस्परसंबंधसत्वात् ब्रह्मज्ञानमेव ब्रह्मयज्ञः । अथवा वेदज्ञानमेव ब्रह्मयज्ञ इति न कोऽपि संदेहः । यतो वेदोऽपि प्राह स्वस्य ब्रह्मजातत्वम् । यथा

**उदुत्यंजातवेदसं देवं वहंतिकेतवः ।**
**दृशे विश्वाय सूर्यम् । यजु० अ० ३३**

येनेश्वरेण वेद जाता स एव जातवेदसः तं जातवेदसमिति । सोऽयं ब्रह्मयज्ञः सत्वरजस्तमोगुणानुसारं त्रिधा विभज्यते । यथा रावणादयो यद्यपि स्वाध्यायपारावारपारीणास्तथापि ते राजसा इति ।

## देवयज्ञः ।

देवा+दिव्यगुणाः पुरुषा येन कर्मणा यज्यंते सेव्यंते स देवयज्ञः । अथवा " विद्वांसोहि देवाः " इति शतपथब्राह्मणे ( ३-७-६-१० ) देवशब्दस्य विद्वद्वाचकत्वात् यस्मिन् कर्मणि देवा विद्वांसो यज्यंते पूज्यंते स देवयज्ञः । विद्वत्स्वादरातिशयो युक्त एव ।

अथवा देवऋणं पितृऋणं आचार्यऋणमिति मनुष्यस्य ऋणत्रयं वर्तते तदृणमुक्त्यभावे सद्गतेरप्यभावः । " ऋणानि त्रीण्यपाकृत्य मनोमोक्षे निवेशयेत् " इति धर्मवादिनां वाक्यानुसारं तदेक ऋणस्यापनयनमेव देवयज्ञ इति । यथा ब्रह्मयज्ञे निर्गुणोपासना, देवयज्ञे सगुणेश्वरस्यार्थादीश्वरमूर्तेः शिवलिंगस्योपासनैव देवयज्ञः । तथा देवजनानर्थाद्विद्वज्जनानुपदिशति भगवान् वेदः ।

**पुनंतुमा देवजना पुनंतु मनसाधियः ।**
**पुनंतु विश्वाभूतानि जातवेदः पुनीहि ॥**

**यजु० अ० १९**

हे देवजना विद्वज्जना, मदंशभूतान् सर्वान् स्त्रीपुरुषान् सद्विद्यासद्धर्मोपदेशेन पावनानि कुरुतेति ।

पितृयज्ञः ।

पितृणां यजनं पूजनं सेवाच येनोपायेन साध्यते । अथवा पितृऋणापकरणं येन पुत्रोत्पत्यादिना संपद्यते सएव पितृयज्ञः । यथा पित्रोराज्ञापालनेन सेवयाच सुतरां तौ संतोषयेत ।

यतः "मातृदेवो भव" "पितृदेवोभव" इति यजुर्वेदे पित्रोर्देवरूपेण प्रोक्तत्वादुभावपि पूज्यौ सन्माननीयौ चेति ।

पित्रोर्मरणानंतरं पित्रोः स्मारकं यथा आलयादिनिर्माणकर्म-अथवा तयोर्नामस्मरणपूर्वकं विद्याध्ययनार्थंयत् द्रव्यादिप्रदानं सर्वमेतत पितृयज्ञ इत्युच्यते । यजुर्वेदे

**ऊर्ज्जं वहंतीरमृतं घृतं पयः कीलालं**
**परिस्त्रुतम् ॥ स्वधास्थ तर्पयत मे पितृन् ॥**

अस्मिन् मंत्रे जीवतोः पित्रोरेव घृतादीष्टवस्तुप्रदानेन संतोषप्रापणं प्रोक्तं । न तु कदापि मृतपित्रोः । यतो मृतपितरौ मृष्टान्नं न कदापि गृण्हीत इति सर्वत्रानुभवः ॥

## भूतयज्ञः ।

भूतानि चराचरात्मकानि यज्यंते सत्क्रियंतेयस्मिन्कर्मण्यथवा तत्तत्कर्मसु संयोज्यंते येन स भूतयज्ञः । यथा पृथिव्यादिपंचमहाभूतानां गुणान् यथावस्थिति संयोज्य शरीरशारीरिकयोरुन्नत्यर्थं क्रियमाणं कर्मापि भूतयज्ञ इति । ननु प्रकृतिर्मनोज्ञानेंद्रियाणां [ चक्षुः श्रोतृघ्राणरसनात्वगाख्यानां ] कर्मेंद्रियाणां [ वाक्पाणिपादपायूपस्थाख्यानां ] वियदादिपंचभूतानां शब्दस्पर्शरूपरसगंधतन्मात्रसहितानांसर्वेषामचेतनत्वात्स्वयं घटनाघटनासंभवाच्चैतानि निरुपयुक्तानीति चेन्न । निरर्थकं नाम न खलु विद्यते किंचिदपि । एवं सर्वेषामुपयोगित्वमेत्रानुभूयते लोके । यथा अचेतनं प्रधानं पुरुषार्थाय प्रवर्तमानं दृश्यते । एवं शिशुसंरक्षणार्थमचेतनं क्षीरं । तथा जलमचेतनं लोकोपकाराय प्रभवति । तस्मात्प्रकृतिरचेतनापि पुरुषविमोक्षाय प्रवर्तयति । एवमेतेषां भूतानां गुणवैषम्यं साधर्म्यं च यो वेत्ति सवै संसारपारदृश्वा भवति । तथा कणादमुनिरपि पदार्थविज्ञानमेव परमपुरुषार्थं इति मनुते । अतो सर्वं पदार्थविज्ञानं भूतयज्ञ इति कथने नकोऽपि संशयः । एवं पदार्थविज्ञानांतर्गतमर्थशास्त्रं रसायनशास्त्रं, शिल्पशास्त्रं वैद्यकशास्त्रं, वास्तुविद्या, धूमनौधूमशकटानिर्मातृतक्षकविद्या, क्षत्रविद्या, नक्षत्रविद्या, कृषिविद्या, व्यापारविद्या, भूगर्भविद्यादि नानाविधप्राकृतज्ञानेषु परां काष्ठां लब्धुं साधयितुं च यत्समीहा क्रियते सोऽपि भूतयज्ञ इति । एवमेव चित्तवृत्तिनिरोधानुसंधानद्वारा प्रवृत्तिं विनिमय्य जीवस्य स्वस्थानापन्नार्थं यमनियमाद्यष्टांगपूर्वकं हठयोगादिर्योऽनुष्ठीयते सोऽपि भूतयज्ञ इति ।

नरा मानवा आकस्मिकाः प्रासंगिका वा यथोचिता-दरादिभिर्यदा सत्क्रियंते तदा स नृयज्ञ इत्युच्यते। एवं ये जितेंद्रिया धार्मिकाः, परहितरता, विद्यापारंगता नित्याटनशीलास्तथाऽन्ये सामान्यपुरुषा अपि आतिथेया इति। अतिथिसत्कारभूतं नृयज्ञ मथर्ववेदोऽपि प्राह। यथा।

तद्यस्यैवं विद्वान् व्रात्योऽतिथिर्गृहमागच्छेत्। स्वयमेनमभ्युदेत्य ब्रूयाद् व्रात्य क्वोवात्सी व्रात्योदकं व्रात्यतर्पयतु व्रात्य यथाते प्रियं तथास्तु व्रात्य यथाते वशस्तथास्तु व्रात्य यथाते निकामस्तथास्त्विति।

अथर्ववेदे कां. १५.

यस्य गमनागमनयोरनियततिथिर्यो वा को वा भवतु। अर्थादकस्माच्चंडालोऽपि यस्यकस्यापि गृहमागच्छेत् सोऽपि सत्का-राह इति। अर्थादाकस्मिकाः सर्वे आतिथेया इति। एवं श्रुति-रपि " आतिथि देवोभव " इत्यतिथेरादरातिशयत्वं प्रतिपादयति। अतो गृहस्थस्यातिथिसत्कारः परमधर्म इति सिद्धम्।

एतेषां पंचमहायज्ञानां धर्मोपार्जनसाधनत्वात्। एते-ऽपि धर्मपदवाच्याइति यथा ब्रह्मयज्ञाद्यनुष्ठानेन मनोवाग्देहजन्यदु-ष्कृतिभिर्भूयमानस्य दुःखस्य वासनारूपं फलं पूर्वमेव विच्छिद्यते। पश्चात्तेषामनियतविपाककर्मणां नष्टत्वाद्दुःखमेव न संभवति। एवमेतेषां धर्मत्वात् धर्मस्य व्याप्तिमत्वादन्येषां धर्मविषयाणामवबो-

धस्यावश्यकत्वात् प्रथमतः धर्मस्य लक्षणं अर्थात् कोवायं धर्मः किमर्थं कस्य कस्य धर्म इत्युच्यते तदेतत्सर्वं परिशीलयामः ।

## धर्मः ।

धर्मस्तु प्रवृत्तिनिवृत्तिभेदद्वयात्मकः । यथा कणादमुनिरपि "यतोऽभ्युदयनिःश्रेयससिद्धिः सधर्मः" इत्यैहिकामुष्मिकोभयफलप्रदात्मको धर्म इति धर्मस्य व्याख्यारूपं सूत्रं सूत्रयति । निवृत्तिस्तु मोक्षाख्यव्यपदेशेन पूर्वमेव विवृता । सांप्रतं प्रवृत्ति धर्म एव प्रपंच्यते । यद्यपीयं प्रवृत्तिर्धर्मार्थकामात्मका इति त्रिविध फलविशिष्टातथापि मोक्षमार्गप्रदर्शिनी । धर्मार्थकामास्त्वनित्या मोक्ष एवनित्यः । इत्येवं स्थितेऽपि धर्मार्थकामानां मोक्षस्य साधनांगत्वात् चतुर्विधपुरुषार्थप्राप्तये यतेत मतिमान्नरः ॥

प्रवृत्तिरपि विहिताऽविहितेति द्विविधा । यथा पूर्वाकर्मानुगतसंस्कारानुगुण्येन अथवा स्वबुद्धिवैपरीत्येन पापकर्मसु मनसः प्रवेशोऽविहितप्रवृत्तिरिति । एवं सुकृततारतम्येन सत्कर्मसु मनसः प्रवेश एव विहितप्रवृत्तिरिति । ननु कथं त्वयाऽयं धर्मोऽयमधर्म इति व्याख्यायत इति चेच्छ्रूयताम् पूर्वमेव मुनिभिर्व्याख्यातोऽस्ति ।

या बिभर्ति जगत्सर्वमीश्वरेच्छाह्यलौकिकी ।
सैव धर्मोहि सुभगे नेहकश्चन संशयः ॥
धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः
यत्स्याद्धारणसंयुक्तं सधर्म इति निश्चयः ।

" धार्यं सर्वं धर्मः " इत्यादि मनुव्यासादीनां व्याख्यानानुसारं सृष्टिक्रियापरिपालनीय ईश्वरीनियम एव धर्म इति निष्कर्ष्यते । अतएव सर्वत्र धर्मस्यास्य श्रेष्ठत्वं गीयते । तथाहि, चतुर्विधपुरुषार्थेषु धर्मस्यैव प्राथम्यात् सर्वाधारभूतत्वादैहिकामुष्मिकसुखैककारणात्वात् कुमार्गादिविनाशपूर्वकसकलेष्टिप्रदत्वान्नीत्याचारविचारविशिष्टत्वादेतादृशाप्रतिमगुणगणमंडितोऽयं धर्मो बालोन्मत्तपिशाचधूर्तनास्तिकचार्वाकेतरैः कैर्वा सादरं सप्रमोदं न स्वीक्रीयेत ।

एवं सति ये केचन सन्मार्गमनाश्रित्य यथेच्छं विहरंति । तथा विधिनिषेधपरित्यागिनो नानासंकुचितबुद्धिप्रचोदितभिन्नाभिन्नहठवादजडजडितपक्षकक्षीकृता धर्मस्यास्याश्रेष्ठत्वं मन्येयुस्तर्हि तेषां गते तस्याश्रेष्ठत्वमस्तु । वयं तु धर्मस्यास्य प्राधान्यमेव मन्यामहे ।

## धर्मस्य लक्षणानि.

" भूतदया, ( प्रेम ) आचारः, विचारः, अहिंसा, दानं, सत्यं, परहितरतिः ( परोपकारः ) भक्तिः, अधिकारः, स्वातंत्र्यम्, समानता सेव्यसेवकत्वं, ( गुरुशिष्यभावः ) राजप्रजानुरागः ऐकमत्यं, ।

प्रेम तदेतत्पुरुषार्थसंपादने महत्साधनीभूतं । तथा देशधर्मदेहात्मादीनामुन्नातिस्थितिप्रापणे आदिमं कारणमिति । अतएव श्रुतिरपि तदिदं प्रस्तौति ।

" सहनाववतु सहनौ भुनक्तु सहवीय करवावहै । तेजस्विनावधीतमस्तु मा विद्विषावहै ।

भगवता बुध्देनापि यावदायुषं भूतदयैव ( प्रेम ) परमधर्मस्तथै हिकामुष्मिकसुखप्रदेति प्रतिपादितम् ।

## आचारः ।

सुशीलसुनीत्यादीनामाचारे समन्वयात् तथा शमदमादिसाधन चतुष्टये संपत्तेरप्यंतर्भावात् नित्यनैमित्तिककर्माणामपि संबंधसत्वा- दाचारः प्रथमोधर्म इति ।

यथाऽऽचारानाचारयोः फलनिर्देशपूर्वकं आचारस्यैव प्राधान्यं मनुराह ।

" दुराचारो हि पुरुषो लोके भवति निंदितः
दुःखभागी च सततं व्याधितोऽल्पायुरेव च "
आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः
आचाराध्धनमक्षय्यमाचारो हंत्यलक्षणम् ॥

एवं बौद्धाअपि " गुर्वादिष्टार्थस्यांगीकरणं तदनुष्टानं चाचार इत्याहुः ।

तथा वेदेऽप्याचारानुवर्तिनः पुरुषस्य श्रेष्ठत्वं श्रूयते ।

आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ।
"आचिनोतिहि शास्त्रार्थं आचारे स्थाप- यत्यपि । स्वयमाचरते यस्मात् आचार्यः परिकीर्त्यते । ऐतरेय आरण्ये. २

अम्नायत्वविज्ञानाच्चराचरसमानतः । यमा-
दियोगसिद्धत्वादाचार्य इति कथ्यते । सुश्रुते ।
" यस्माद्धर्मानाचिनोति स आचार्यः ।
" तच्छ्रेष्ठं जन्म " इत्यापस्तंबः

एवं निरुक्तेऽपि यास्कमुनिः प्राह १ । १ । २ । २

आचार्यः कस्मात् । आचारं ग्राहयति
आचिनोति अर्थान् आचिनोति बुद्धिमि-
ति वा । "

" उपनीय तु यःशिष्यं वेदमध्यापयेद्द्विजः
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ।
मनु. अ. २

एवमाचार्यस्य सदसद्विवेकशक्तिसंपन्नत्वात् शिष्योद्धारकप्रज्ञाप्रदातृशक्तिमत्वाच्च जनकादपि गुरुर्गरीयानिति सर्वत्र वर्णितोऽस्ति ।

" त्रयः पुरुषस्यातिगुरवो भवंति माता
पिता आचार्यश्च " वि. स्मृ.

" पिताह्येनं जनयति पुरुषं पुरुषर्षभ ।
प्रज्ञां ददाति चाचार्यस्तस्मात्स गुरुरुच्यते "
वा. रामायणे. अयोध्या स. १११

"उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदःपिता ।
मनु अ. २

एवमेव चरकमुनिरप्याह ॥ "आचार्यं परीक्षेत । तद्यथा पर्यवदातश्रुतम् । परिदृष्टकर्माणं, दक्षं, दक्षिणं, शुचिं, जितहस्तं, उपकरणवंतं, सर्वेंद्रियोपपन्नं, प्रकृतिज्ञं, प्रतिपत्तिज्ञं, अनुपस्कृतविद्यं, अनुसूयकं, अकोपनं, क्लेशक्षमं, शिष्यवत्सलमध्यापकं, ज्ञापना समर्थमित्येवं गुणविशिष्ट आचार्यः स्वक्षेत्रं आर्तवो मेघ इव शस्यगुणैः सुशिष्यमाशु-संपादयति ।

तथा हारीतमुनिनाप्याचारवाचकाः सुशीलादयः प्रदर्शिताः ।

देवमातृपितृभक्तता, सौम्यता, अपरोपतापिता, अनसूयता, मृदुता, अपारुष्यं, मैत्रता, प्रियवादित्वं, कृतज्ञता, शरण्यता, कारुण्यं, प्रशांतता, इति त्रयोदशविधं शीलमिति ॥

एवं ग्रंथांतरे.

"अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुगृहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः। इति

तथा " विद्याध्ययनं, ब्रह्मचर्यं, तपः, बुद्धिमत्ता, परोपकारः, सदाचारः, निरभिमानः, विज्ञानं, शांतिः, इंद्रियनिग्रहः, धैर्यं, गाभीर्यं, चातुर्यं, अनुभवः, देशहितैषित्वं, देशकालवर्तमानस्थितिज्ञता, प्रगल्भः, सरलभाषाकोविदत्वं, नीरोगः, निर्व्यसनं, विवेकः, सत्यप्रियता, लोकप्रियता, मृदुभाषणम्, इत्याद्याचाराणामवलंबनेन पुरुषः सकलविषादाज्ञानांधकारमुच्छिद्य सुखसागरे ह्युल्लसेत् ।

## "विचारः"

कस्यचिद्विषयनिर्णयस्य विचाराधीनत्वात् विचारस्यार्थावबोधहेतुत्वात् ग्रंथमात्रावबोधोऽनिश्चितार्थः । स्वकीयबुद्धिप्रभावजन्यविचाररहितः परविचारावलंबी न कदाप्यधिगताभिलाषो भवेत् । यतः स्वतंत्रविचारेणैव सर्वार्थसिद्धिः। पश्य तावत् प्राचीनार्वाचीनानां स्थितितारतम्यं तथा तदनुसारफलवैषम्यमपि । यथा प्राचीनाः स्वप्नेऽपि परकीयाविचारमनवलम्ब्य स्वविचारवैभवेनामानुषीं शक्तिमैहिकसुखं चानुबभूवुरिति तत्कालीनेतिहासोऽप्याप्यवगमयति । परमाधुनिकाः स्वतंत्रविचारमनादृत्य निर्बुद्धयः संतो दासवृत्तिमनुभवंतः प्रत्यहमैहिकामुष्मिकसुखाविमुखा अधोऽधो यांतीति प्रत्यक्षतो दृश्यते । यथा यत्किमपि ग्राह्यं नूतनकार्यमाचरितव्यमस्ति चेदिदमस्माकं पितृपितामहैर्नाचरितं यथाऽस्माकं शास्त्रेऽपि नोक्तमित्यादिसंकुचितविचारग्रस्तास्तत्कर्मफलपरांमुखा दूरीकृतैहिकसुखा अदृष्टं निंदंतो दैवमेवाश्रयंतो " क्लीबादैवमुपासते " इति वाक्यानभिज्ञाः स्वपौरुषहीनाः संसारप्रगतिविघातका दीना मृत्युकालं नयंति हा धिक्कष्टमेतत् । तथैते परमेश्वरदत्तविचारस्वातंत्र्यदानाविस्मारका अभवन् अत इमे कृतघ्नतादोषमप्याप्नुवन्यंत एतादृशकृतघ्नपदारूढो न भवितव्य इति मनसि पुनः पुनः निर्धार्य केनापीयं ब्रह्मोक्तिरस्तीति चेदपि स्वयमनभिचिंत्य कदापि कैरपि विश्वासो न कार्यः । सर्वत्र सर्वसदसद्विवेकबुद्धिपूर्वकं स्वतंत्रविचारसुखमेवानुभवेयुरिति । यदि यत्र कुत्रापि शास्त्रेऽथवा व्यवहारविषये संशयःस्यात्तर्हि तत्संशयनिवारणमथवा विषयनिर्णयश्च स्वविचारशक्त्यैव कार्य इति ज्ञापयाम्यहम् ।

# अहिंसा.

अहिंसा इत्येतदाचंडालसाधारणधर्मः । अतएव "मानोवधीःपितरं मोत मातरंमानःप्रियास्तन्वो रुद्ररीरिषः"

यजुः—

इत्यादिमंत्रेषु भगवता वेदपुरुषेणोपदिश्यते सर्वैःसर्वदाऽनभिद्रोहेणैवाचरणीयमिति । अतः सर्वेषां वेदमूलकत्वाद्वेदा एव स्वयं प्रामाण्यमर्हंति तदितराणि सर्वाणि शास्त्राणि वेदानुकूल्येनैव प्रमाणतां भजंत इति । तथा तद्विप्रतीपसकलग्रंथजातस्य हेयत्वनिश्चयात्सर्वैर्वेदमतमेवानुसर्तव्यम् । यतः " ईश्वरोक्तत्वादेव वेदानां प्रामाण्यमिति" कणादमुनिरपि सूत्रं सूत्रयति यथा " **तद्वचानादाम्नायस्य प्रामाण्यम् ॥**" एवमन्येषु मनुष्यबुद्धिरचितग्रंथेषु भ्रमसंभवात्ते ग्रंथाः कदापि प्रामाण्येनांगीकर्तुं नोचिता इति ।

परं तत्रापि वेदार्थमनवबुद्ध्य प्रतिपादितहिंसाविषयो वेद इति कुत्राप्यचिंतितदोषमारोपयंति वेदे । परं तदेतत्सर्वं निर्मूलं यतोऽनिर्दिष्टहिंसाविषयो वेदइति निःसंदेहेन ब्रूमः । यद्येवं हिंसाविषयो मुनिभ्यो वेदेभ्यश्च संमत असीत्तर्हि पतंजलिमहर्षिणा ।

" अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्याग " इत्यहिंसामहत्व प्रदर्शकसूत्रं कथं सूत्रितम् । तथा ' न हिंस्यात्सर्वाणि भूतानि ' इति स्मृत्यंतरेषु भूतमात्राणामनभिद्रोहत्वं कथं प्रतिपादितम् । केवलं प्राणिनां हननमेव हिंसेति न किंतु तेषांविषये परुषवाक्योच्चारणमपि हिंसा भवति । यथा गतनेत्रेंद्रियस्य यः कोऽपि रे अंध इत्याह्वयति चेत्तत्कठोरवाक्येन सोऽयं दुःखितांतः करणोहिंसितो

भविष्यतीत्यतो हिंसा सर्वत्रनिषिद्धेति सूक्ष्मविचारेण हिंसां निषेधयितुं व्यासमहर्षिरपि अहिंसासत्यमस्तेयेत्यादि योगसूत्रस्थाहिंसाशब्दं "सर्वथा सर्वदा सर्वभूतानामनभिद्रोहोऽहिंसा ज्ञेयेति" व्याचख्ये। एवं सर्वत्राहिंसाप्रतिपादकशास्त्रे सत्यपि ये हिंसाबोधकं शास्त्रमिति वदंति ते कीदृक्स्वार्थसाधका इति विद्वद्भिरेवानुसंधेयम्।

अहिंसाशब्दस्य स्पष्टोर्थस्तु प्रेम इति। तथा सर्वत्र प्राणिमात्रादिष्वात्मभावं स्थिरीकृत्य प्रेम्णा वर्तितव्यम्। एवं भगवता बुद्धेनापि भूतदयाघनत्वं तथा तेनैव सर्वार्थसिद्धिरिति यावदायुषमुपदिष्टम्। तस्मादेनादृशसर्वार्थसिद्धिप्रदाहिंसाऽथवा प्रेम सर्वैरवश्यमेव पालनीयमित्यत्याग्रहेण बोधयाम्यहम्।

## अधिकारः

अधिक्रियते सर्वस्मिन् कर्मणीत्यधिकार इति व्युत्पत्या क्षुद्रप्राणिमात्रादारभ्य मनुष्यकोटिपर्यंतं सत्ताऽथवा सत्वं चान्योन्यमावृतमास्ति। सत्तेयं मनुष्येष्वेव विश्रांता। तथा विचाराधिकारस्वतंत्रगुणत्रयसत्वादेव नरजन्मातिदुर्लभं तथाऽस्मिन्येव जन्मन्यधिकारस्य परिपूर्तिः। यथा मनुष्याणामधिकारस्तद्वदितरजंतूनांनास्त्यधिकारः। सर्वाधिकारसत्वादेवासाध्यमपि साधयित्वा सर्वं स्वायत्तीकरोति। एवं बलीयांसं गजश्रेष्ठमपि छित्वा भूतलं प्रापयंतं विस्मयास्पदशक्तिविशिष्टं मृगेंद्रवाचकं सिंहमपि मनुष्यः स्वबुद्धिबलपराक्रमेणात्मस्फूर्या चात्मसात्कृत्य स्वेच्छया विहरंतं नियम्य तथा स्वभावसिद्धवैरमप्यपनयति। स्वसत्ताधीनाहारविहारादिभिश्चेष्टयति। एवं मानवशक्तेः पारं कल्पयितुं

कोऽपि न प्रभवेदतो मनुष्य एव सर्वेषु श्रेष्ठाधिकारीति सिद्धम् । किं च भोः भवतापि जगद्वंच्यते किमु । अहो मैवं मंस्थाः । नास्ति मे वंचकबुद्धिः स्वप्नेऽपि । ।किं तर्हि नरजन्मातिदुर्लभमित्यत्र नरनार्योर्जन्मातिदुर्लभमिति किन्न लिखितमिति चेच्छृणु, तत्रैव पृथङ्नाम गृहीतव्यमासीत् । परं नरनार्योर्जातित्वसमानत्वाधिक्रण्याज्जात्यैकवचनस्य निर्देशः कृतः । तथाऽस्मिन् विषये यो भेदभावः कैश्चन पंडितैः प्रदर्शितः । सर्वोऽग्रे पर्यालोचनीय इति मनसि विधाय तत्र नोल्लिखितम् । तत्सर्वमधुनात्र पर्यालोचयामि । यथा " स्त्रीशूद्रौ नाधीयेताम् " इति स्त्रीषु दासभावमारोप्य स्त्रीणां शूद्रजातावेव समावेशः कृतस्तथैतासामुपनयनादिसंस्कारान् निषिध्याध्ययनाध्यापनविधिरपि प्रतिषेधिता । यथा शूद्राणां विषये अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम् । वेदोच्चारणे जिह्वाच्छेदो धारणे शरीरभेदः" एतादृशानर्थकवाक्यानि प्राधान्येनांगीकृत्य श्रीशंकररामानुजमध्वाद्याचार्या बहुशः कोलाहलं समाचरन् । यथा इतश्च न शूद्रस्याधिकारः । यदस्यस्मृतेः श्रवणाध्ययनार्थप्रतिषेधः । वेदश्रवणप्रतिषेधो वेदाध्ययन प्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते । तथा वेदपूर्वकस्तु नास्त्याधिकारः शूद्राणामिति स्थितम् । एवं तच्छिष्यैः श्रवणेऽतितप्ताभ्यां शीसलाक्षाभ्यां श्रोत्रद्वयपूरणं कारयेत् । उच्चारणे जिह्वाच्छेदो धारणे हृदयविदारणमित्यादि लिखितम् । एवं मनुष्येष्वेव भिन्नभावमवलंब्य तथा स्त्रीष्वपि नीचभावं प्रदर्श्य स्त्रीशूद्राणामनधिकारः शास्त्रे

त्वित्युपादिशन्। परं प्रकृतेऽपि तदनुयायिभिस्तथैवाचर्यते। एवं सति महद्भयानकं वज्रं किं तवोपरि न स्यात्। यतो भवतोक्तं पूर्वं सर्वेषां स्त्रीपुरुषाणां समानाधिकार आसीदेवं शास्त्रोक्तिरप्यास्ति। तथाऽऽप्तोक्तिरेव सर्वत्र प्रमाणमिति। एवमस्माभिरुपरि निर्दिष्टाचार्योक्तिः किमाप्तवाक्यवत्प्रामाण्यं न भवतीति चेन्नहि। यतो भवन्निर्दिष्टानामेतादृशवाक्यानां प्रामाण्याभ्युपगमे महदनर्थापत्तिः संभवेत्। इतोऽन्येष्वितिहासपुराणेषु शास्त्रानुभवव्यवहारविरुद्धानां भूयसीनां कथानां विवेचनं भवदुक्तप्रकारेणैव प्रत्यक्षयामः। एवमेतादृशवाक्यानि प्रमाणानि भवेयुस्तर्ह्यन्यैः सदसद्विवेचनधुरीणैर्यथार्थज्ञानविस्तरपरैरैहिकामुष्मिकसुखाभिवृद्धिहितकांक्षिभिर्याथातथ्यमांशंसमानैः प्राचीनैर्या विलिखितास्ताः सर्वाः कथा अतात्त्विकतामापद्येरन्। अतोऽस्मिन् विषये कीदृग्वाक्यमाप्तवाक्यवद्ग्राह्यमितिचेत्। "यथार्थोप्तस्तु वेद एव तदनुकूला ग्रंथा अपि आप्तवाक्यवद्ग्राह्या" इति यथा

"आप्तः खलु साक्षात्कृतधर्मा: साक्षात्करणमर्थस्याप्तिस्तया सह वर्तत इत्याप्तः। एतादृशाप्तानामेव वाक्यानि प्रामाण्यमर्हंति। तदितराणां यद्वातद्वा प्रजल्पितानां वचनमप्रमाणमिति। वेदातिरिक्तसर्वग्रंथानामल्पज्ञजीवनिर्मितत्वात्क्वचित् क्वचित् प्रमादा भवंत्येव। अतो यत्क्रियानुष्ठानेन यद्धर्माचरणेन च जगतः परमोत्कर्षः संपद्येत। एवं यदननुष्ठानेन प्रतिकूलगमनेन च जगती महती हानिर्ज्जायेत। तथैतादृशगुणदोषविवेचनपुरस्सरं विविच्योपादेयानुपादाय वर्जनीयान् परिवर्जयेत्। अतो लोकोन्नतिविनाशकानधिकारपक्षोऽयमग्राह्य इति परामृश्य प्रस्तुतविषयविवेचनमारभे।

भार्या पुरुषस्यार्धांगिन्यतो यत्र यत्र पुरुषस्याधिकारस्तत्र तत्र स्त्रीणामप्यधिकारोऽस्त्येव । अथवा स्त्रीगर्भादेव निःसृतानां बालानां यदि सर्वाधिकारोऽस्ति तर्हि जन्यजनकसंबंधोपाधिकतया तदुपादानकारणीभूतानां सर्वाधिकारः किन्न स्यात्

पूर्वं समानाधिकारप्रचारस्य सत्वादेव विद्याध्ययनं कृत्वा सुसंस्कृताः शुभगुणान्विताः सुलभसीताश्रुतावतीगार्ग्यादयः स्त्रियो यथा समभवन् । तथा तादृशस्त्रीभिरुत्पन्नपुत्रा अपि कथं सद्गुणान्विताः सजाता इत्येतत्प्राचीनेतिहासोऽवबोधयत्यस्मान् । यथा वाल्मीकिरामायणे जगदभिरामरामपुत्रयोर्लवकुशयोः कथा । तथा ऋष्यशृंगाभिमन्युनेपोलियनूबोनापार्टादीनां कथाः केषां चकितचेतसां चेतसि चमत्कारं न जनयेयुः । एवमेव सुश्रुतग्रंथे शारीरप्रकरणे निगदितम् यथा ।

**आहाराचारचेष्टाभिर्यादृशीभिः समन्वितौ । स्त्रीपुंसौ समुपेयातां तयोः पुत्रोऽपि तादृशः ।**

अतः सत्संतानार्थं स्त्रीणां बाल्यावस्थायां वेदादिसत्यशास्त्राणि शिक्षणीयान्येव । यतस्तत्संस्कृतगृहमपि दृढतमं जायते । अतएव भूमिर्हिभूतानां शाश्वतियोनिरुच्यते । इति मनुवाक्यानुसारं सर्वबीजानां यथा भूमिः स्थानं तद्वन्मनुष्याणां स्त्र्यपि शाश्वती योनिरुच्यते । पुरुषशरीरे यावान् रसरुधिरमांसादिधातुसमुदायस्तत्सर्वो गर्भावस्थायां मातुःशरीरादेव संकलितोऽस्ति । अतो यथा

मातृपितॄणां संस्कारस्तथैव बालानामपि । अतएव " त्रिवृत-शायिनी नक्तंचारिणी चोन्मत्तं जनयति । अपस्मारिणं पुनः कलिकलहशीला, विवायशीला दुर्वपुषमन्हीकं, स्त्रैणंवा, शोकनित्या भीतं, अपचितमल्पायुषं वा, अभिध्यात्री, परोपतापेनं ईर्ष्यं स्त्रैणंवा, स्तेनात्यायासबहुलं, अतिद्रोहिणं अकर्मशीलं वा, अमर्षणा चंडं, औपाधिकमसूयकंवा, स्वप्ननित्या, तंद्रालुमबुधं, अल्पाग्निंवा, इत्यादि तथा प्रियहिताभ्यां गार्भिणीं विशेषेणोपचरंति कुशलाः ॥ चरक, शारीर ४

तथा भगवान् मनुरपि स्त्रीष्वादरबुद्धिमेव प्रकटयति ।

## यत्रनार्यस्तु पूज्यंते रमंते तत्र देवताः ॥

एवं यमस्मृतावपि

" पुराकल्पेतु नारीणां मौंजीबंधनमिष्यते । अध्यापनंच वेदाना सावित्री जपनं तथा ।

एवं पारस्करगृह्यसूत्रेऽपि

स्त्रिय उपनीता अनुपनीताश्च ॥ तथा हारीतेनाप्युक्तम्

" द्विविधाः स्त्रियो ब्रह्मवादिन्यः सद्यो वध्वश्च । तत्र ब्रह्मवादिनीनामुपनयनमग्नींधनं वेदाध्ययनं स्वगृहे भिक्षाचर्या इति वधूनामुपस्थिते विवाहे कथंचिदुपनयनमात्रं कृत्वा विवाहः कार्यः

**एवं व्याकरणमहाभाष्ये " उपेत्याधीयते तस्या उपाध्यायी, उपाध्याया ।**

**अ. ३-३**

इत्याध्यनंतवाक्यानि स्त्रीणां समानाधिकाराध्ययनाध्यापन प्रतिपादकानि समुपलभ्यंते । एवं जन्मासिद्धजातिवादस्यासिद्धत्वात् महिलापि सुशीलं विद्वांसं सदाचारिणं पुरुषं जात्यादिकम- विगणय्य स्वयं वरयितुं समर्थाऽस्ति । तथा पुरुषोऽपि स्वयं- छानुरूपमहिलां पाणिगृहीतुं समर्थः । यथा शास्त्रेऽपि

" आददीदवराद्विद्यां स्त्रीरत्नं दुष्कुलादपि । इतिमनुः

उपरिनिर्दिष्टमहर्षीणामुक्त्युपक्रमणसामर्थ्यात् स्त्रियो नीचा धूर्ताचाराः कुलघ्ना दुष्कृतावलीढाः संतीति दोषान्नारोप्य " स्त्री- शूद्रौ नाधीयेताम् " इति यद्धूर्तैरुक्तं तन्निरस्तम् ॥

अत्रैवं विचिकित्स्यते स्त्रीणां रजस्वलादिदोषाः संति । तत्र भवदुक्तेरत्यंतविरुद्धत्वात्कथं त्वदुक्तिसंगतिरितिचेन्नैवं । यत एतासां रजस्वलादयः शरीरधर्माः शरीररक्षणार्थमेव कठिनव्रतेन नियताः संतिः । " यथा दिनचतुष्टयं यावत् रजस्वलाया दर्शनस्पर्शनादिकं नैव कार्यम् यदि करोति तर्हि महापापी स्यादिति एतादृशनियमाभावेऽतिकामलोलुपा मनुजा भोगादिकमाचर्य रुग्णा भवेयुरिति मत्वा लोकोपकारार्थमेव तत्कालीनविद्वद्भिर्नियमोऽयं नियमितः । परमधुना पूर्वस्मात्कालादप्ययं वैपरीत्यं गतोऽस्ति । यतो रजस्वलास्तत्समयेऽतिनीचचंडालस्त्रीणामिव व्यवह्रियंते । परं च नैतद्विहितम् । यतो रजःपतनानंतरं स्नानादिकं कृत्वा गृहकार्यकरणे न कोऽपि दोषः । परं भोगस्तु सर्वत्र त्याज्य एव वमेव चरकसुश्रुतायुर्वेदशास्त्रकारा अपि व्याख्यापयामासुः ।

एवं सत्यपि पूर्वोदाहृतास्पर्शत्वादिदोषारोपः स्थित्यंतरं न जहातीति चेत् पुंडरीकादिदीर्घसत्रेषु विवाहादिमंगलसमयेषुच रजस्वलाद्यशौचदोषो न संभवति । तत्र केवलं स्नानमात्रेण विशुद्धिं गच्छतीति च कथं तत्र पर्यावर्तितम् । सोऽयं विवाहादिसमयो मंगलमयोऽस्त्यतः सर्वं तत्र मंगलमयमिति चेत् रजः शोणितं तु न पृथक् शोणितस्य सर्वत्रैकरूपत्वान्निश्चीयते भवदुक्तदोपारोपो न तु नैसर्गिकः । किंतु नैमित्तिक इति । तस्मात्सर्वत्र स्नानादिनैव शुद्धिं संभाव्य गृहकार्यकरणे रजस्वलास्त्रीणां न कोऽपि दोषः ।

गर्भावस्थायां यथा स्त्रीणामाचारविचारव्यवहारास्तथा तज्जन्यसंतानस्येति ब्रूमः । अतो विहितविद्याध्ययनेन स्त्रियः सदा सुसंस्कृताः कार्या इति । तथा सर्वेषां स्त्रीपुरुषाणां समानाधिकार इति सिद्धम् ।

## भक्तिः ।

समस्तसृष्टिसंहारानुग्रहकारिणं परमात्मानमधिगंतुं धर्मांतर्गतभक्तिरेव मूलेति निरटंकि भक्तिमार्गप्रदर्शिभिः पुण्यात्मभिः । तथा निरतिशयानंदप्रियानन्यप्रयोजनसद्भावभजनमेव भक्तिरित्येतादृशभक्तियोगेनैव संस्कृतांतःकरणा ब्रह्मपदमवाप्नुवंति । एवमनन्यभक्तियुतानां भक्तानामापदः स्वयं भगवानेव निवारयति । यथा भगवद्गीतायां

**अनन्याश्चिंतयंतो मां ये जनाः पर्युपासते**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्**

**अ. ९–२२**

सात्विकश्रद्धाविशिष्टपुण्यात्मानः कदापि दुर्गतिं नानुभवेयुरिति भगवदुक्तिसत्वात् सर्वत्र भक्तिर्गरीयसी । तथा श्रध्दाभक्तिविधुरं यद्यत्कर्म बह्वायासेनाचरितं चेदप्यैहिकामुष्मिकसुखाय न भवति । अतएव " श्रद्धां कामस्य मातरम् " इति सर्वस्यापि कर्मणो भक्तिमूलकत्वस्मरणात् भक्तिः सर्वदाश्रयणीया । भक्तिरियं चतुर्दशधा प्रपंचिता पूर्वाचार्यैः । तद्यथा.

**विष्णोस्तु श्रवणे परीक्षितिरभूद्वैय्यासकिः कीर्तने । प्रल्हादः स्मरणे तदंघ्रिभजने लक्ष्मीः पृथुः पूजने ॥ अक्रूरस्त्वभिवंदनेऽथ हनुमान् दास्ये च सख्येऽर्जुनः । सर्वस्वात्मनिवेदने बलिरभूत्कैवल्यमेषां पदम् ॥**

एवंविधभक्तिविशेषसमासादितपुरुषोत्तमप्रसादविध्वस्ततमःस्वांतपुरुषा भक्ताः सत्पुरुषा इत्युच्यंते । तथा सामान्यजनैः संपूज्यंते तेषां चरणारविंदानि स्वस्ववांछासिध्यर्थम् । परमियं भक्तिर्मंत्रतंत्रवेषभाषादिबाह्याडंबराटोपरूपदंभरहिता तथा कुलशीलविद्याश्रमादिश्रेष्ठभावाहंभावपरिकराटोपासंसगिता रागद्वेषासूयेर्ष्यादिदुर्भावैर्दूरीकृता भवितव्येति । यतो विक्षिप्तमनसां भक्तिः सुतरां परमार्थसाधनाय नैव भवति ।

बांधवाः अस्मिन् भारते ईदृशाबहवो विमलमतयः पुण्यात्मानोऽभवन् । ये परमात्मानमेवानन्यभक्त्या ध्यायंतः स्वदेहं तृणवन्म-

न्यमानास्तत्प्राप्त्यर्थं देहं धिक्कुर्वंतः प्राणमपि पर्यत्यजन्निति । मत्सामायिकमेकमुदाहरणमत्रोल्लेखनीयमस्ति । यथा " दक्षिणस्यां दिशि धारवाडदेशांतर्गतमरेवाडग्रामवास्तव्यः पवित्रलिंगांगि धर्माचार्य (गुरु) कुलोत्पन्नः षोडशवर्षवयस्को बुद्धिमान् सुशील श्चंद्रशेखरनामा बालको जगदीश्वरमनन्यभावनयाऽहर्निशं ध्यायन् तत्तपोनुष्ठानजन्यप्रभावेण चमत्कारजनकानेकविषयान् प्रकटयन् सर्वत्र संस्तूयमानोऽयं परमार्थदृष्ट्या सर्वाण्यागामिविवाहाद्यैहिक-कार्याणि दुःखबहुलानीति मत्वा बाल्य एव परमपदं प्राप्तुकामस्ती-व्रवैराग्यावेशेन साक्षात्कृतधर्मोऽयं पुष्टांगोऽप्येकस्मिन्नेव निशि ।

महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः
भजंत्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ।

भ. अ. ९-१३

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यासि सत्यं ते प्रतिजाने-प्रियोऽसि मे । सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्ष-यिष्यामि मा शुचः ॥

अ. १८-६५-६६

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमि-च्छति । तस्य तस्याचलां श्रद्धां तामेव-विदधाम्यहम् । भ. अ. ७-२१

यं यं वापिस्मरन्भावं त्यजत्यंते कलेवरम्।
तं तमेवैति कौंतेय सदा तद्भावभावितः ॥
भ. अ. ८-६

मरणे मामनुस्मृत्य प्राप्नोति परमां गतिम्।
यामधीत्य प्रयाणे तु मद्भावायोपपद्यते ।
ओंकारमग्रतः कृत्वा मां नमस्कृत्य नारद।
एकाग्रः प्रयतो भूत्वा इमं मंत्रमुदीरयेत्।
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तमृगैरिव ॥
अत्रिस्मृतौ

इति भगवद्वाक्यानुसारं सर्वशास्त्रेंगितज्ञोऽयं बालको ब्रह्मपदं चिंतयन् परं धाम प्राप्तवान् ॥ अतएव सर्वार्थसिद्धिप्रदायि केयं भक्तिः सर्वत्र संस्तूयते । तस्मात्सर्वमानवा भक्तियुता भवेयुरित्याशासे ।

## राजप्रजानुरागः

राजनियमितं राज्यं सर्वदा सुखोल्लासेनोल्लसति । यस्मिन् देशे राजा नास्ति तत्राराजकतया प्रजाः प्रबंधरहिताः संतो मिथः कलहायमाना दुःखमेवानुभवेयुरहर्निशम् । तस्माद्राज्यनियमनार्थं प्रजानां सुखप्रापणार्थं राज्ञोऽत्यावश्यकता । प्रजानां सुखार्थमेव राजा नियतोऽस्ति । न तु केवलं स्वसुखार्थमेव । अतो राज्ञा पुत्रवत्प्रजाः संरक्षणीया इति । यथा " रक्षार्थमस्य लोकस्य राजानमसृजत्प्रभुः "

एवमराजकराज्यं कदापि प्रजानां सुखप्रदं न भवति । तथा शासकाभावे प्रजाः प्रबंधरहिताः संतो मिथोऽहितमेवाचरेयुस्तस्मात्पूर्वजा अपि नृपस्यास्तित्वमंगीकृत्य " राजा प्रत्यक्षदेवता " इत्यप्यस्तुवन् । एवं राज्ञापि प्रजानां यथान्यायनिर्णयार्थं विश्वस्थसर्वप्रजासुखार्थं सभात्रयस्य रचना कर्तव्येति वेदे प्रतिपादितोऽस्ति । यथा

**त्रीणि राजानि विदथे पुरूणिपरिविश्वानि भूषथः सदांसि । ऋ. ३-२-२४**

विद्यादिसभात्रयस्य संमतिं विना कामपि स्वकीयवांछां कर्तुं न प्रभवेत् यतः

**प्रभुः स्वातंत्र्यमापन्नो ह्यनर्थायैव कल्पते ।**
**भिन्नराष्ट्रो भवेत्सद्यो भिन्नप्रकृतिरेवच ॥**

एतासु सभासु केचन प्रजापक्षपातिनः केचन राजपक्षावलंबिनः । सभासदः स्थेयाः ।एवं नियतप्रतिनिधिसंमतिपूर्वकमेव राजा राज्यं शासयेत् ।अन्यथा प्रजा विपरीतमनस्काः संतोऽराजकतां वर्धयंतो राष्ट्रमशांतिमयं कुर्युः । अतः प्रजातंत्रराज्यमेव सर्वसंमतं शांत्युत्पादकं सुखावहं चेति । एवमेव कृतराज्यशासकाः पूर्वकालीनभारतीयाः । यथा रामायणमहाभारतादीतिहासेषु वर्णितोऽस्ति । दशरथः स्वतनुजं रामं राज्येऽभिषेक्तुं प्रजासंमतिमेवापेक्षितवान् । एवं

**ततः परिषदं सर्वमामंत्र्य वसुधाधिपः**
**हितमुद्धर्षणंचैवमुवाच प्रथितं वचः । सोऽहं**
**विश्राममिच्छामि पुत्रंकृत्वा प्रजाहिते ।**
**सन्निकृष्टानिमान् सर्वाननुमन्य द्विजर्षभान् ।**

**यदि मेत्वनुरूपार्थं मया साधु सुमंत्रितम् ।**
**भवंतोमेऽनुमन्यंतां कथंवा करवाण्यहम् ॥**

इत्यादिभिरौरसपुत्रविषयेऽपि प्रजासंमतिरपेक्षिता तर्ह्यन्यविषये-ष्वगृहीतप्रजाभिप्रायो दशरथ इति को वा वदेत् ।

एवं शुक्रनीतावपि राष्ट्रशासनार्थं प्रजासंमतिरपेक्षिता । यथा

**नहि तत्सकलं ज्ञातुं नरेणैकेन शक्यते ।**
**अतः सहायान् वरयेद्राजा राज्यविवृद्धये ॥**

एवमेव प्राचीनभारतीयनृपाणां प्राजावात्सल्यमपि कीदृगासी-दित्येतज्जगदाह्लादकश्रीरामचंद्रोदाहरणेन प्रतीयते । यथा

**स्नेहं दयां च सौख्यंच यदिवा जानकी मपि । आराधनाय लोकस्य मुंचतो नास्तिमे व्यथा ॥**

एवं प्रजाक्षोभमसहमानो रामः राज्ञां प्रजाहितचिंतनमेव "परमधर्म" इति वदन् तथैवाचरन् बभूव लोकप्रियोऽजरा-मरकीर्तिमान् । एतादृशजगदभिरामस्य रामस्येदं वचनं श्रुत्वा को नाम नाभिनंदेत् अथवा को नाम नानुपृच्छेत् ।

**"अस्ति किमु कोप्याधुनिकभारतीयसप्त शतसंख्याकनृपतिष्वेकोऽप्येतादृशो नृपः" इति**

अद्यत्वे "नहीं नहीं" त्युत्तरं श्रुत्वा कोवा विषादी न स्यात् ।

प्रार्थये जगदीश्वरमनन्यभावनया इतः परं राज्ञां गाढप्रजा-वात्सल्यबुद्धिं तथा प्रजानां भूपाज्ञापरिपालनबुद्धिं दत्वा परस्परं राजप्रजानुरागमभिवर्धयित्वाऽनुगृह्णात्विति ।

एतावत्पर्यंतं निर्दिष्टसर्वगुणानां धर्मांतर्गतत्वात् एतत्सर्वं गुणानुष्ठानेनैव धर्मानुष्ठानभूतत्वात् सोऽयं कृतार्थो भवेत् यतो, धर्मेणहि सहायेन तमस्तरति दुस्तरम्" तथाच

आनित्यानि शरीराणि विभवो नैव शाश्वतः। नित्यं सन्निहितो मृत्युः कर्तव्यो धर्मसंग्रहः। गृहीत इवकेशेषु मृत्युना धर्ममाचरेत्। चंचलानि षडेतानि ज्ञात्वा धर्मरतो भवेत्। धर्म एव हतो हंति धर्मो रक्षति रक्षितः।

एवं कवयोप्युद्गिरंत्यस्मिन् विषये

धर्मं यो न करोति निंदितमतिः स्वर्गार्गलोद्धारणम्। पश्चात्तापयुतो जरा परिगतः शोकाग्निना दह्यते॥

इथ्थमेव महर्षयोऽपि जोषं जोषमघोषयन् यज्जंतूनामिहामुष्मिन् जीवनाधारभूतः परमसुखास्पदः परमपदप्राप्त्यैककारणं निखिलजगज्जननीभूतश्चायं धर्म इति तथा निरातिशयसाम्यस्य धर्मस्य परिपालनमेव परमकृतकार्यमिति च।

एवं महात्मा भर्तृहरिरपि विललाप विधृतधर्मभावेन

नध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये। स्वर्गद्वारकवाटपाटनपटुर्धर्मोपि नोपार्जितः।

इति तृण्वारभ्य सर्वे पदार्था उत्पत्तिस्थितिलयाधीनास्तदेतदुत्पत्त्यादिक्रमं यन्नियमयति तदेव नियमनं धर्म इति । एवं विचारपूर्वेन निश्चितार्थो भवति धर्मोऽयं सर्वजीवनाक्रांत इति ।

यत् किमपि कर्मानुतिष्ठति तत्सर्वं धर्म इत्याख्यायते । एवं सति सर्वं धर्मबंधनेन बंधितोऽस्तीति । अर्थात् चराचरवस्तुजातं सर्वं धर्माधीनं धर्मांतर्गतमिति । तस्मान्मनुष्योऽपि धर्माधीनः । धर्मादतिरिक्तं न किमपि । अतो धर्मपराणां भवंति कल्याणसंपदः समीपसंचारिण्यः । भगवता जैमिनिनापि चोदनालक्षणार्थो धर्म इति धर्मो लक्षितः । चोदनातु विधिप्रतिषेधविचारणनिबंधना । सकलार्थविषयज्ञानावच्छिन्ना । सकलपदार्थसंलग्ना । तत्तन्द्रूपसाक्षात्कारबोधप्रदेति नत्वेतावदेव भूतं भवंतं भविष्यंतं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थमवगमयतीत्यतश्चोदनाबलादेव सकलार्थज्ञानसंभवाचोदनालक्षणयुक्तधर्मः सकलजगज्जननकारणीभूत इति कथने न कोऽपि संदेहः

एवं धर्मशब्दवाच्यकर्मावश्यं करणीयमेव । लोके कर्मानुष्ठानं विना न किमपि सिध्यतीति भगवान् कृष्णोप्याह भगवद्गीतायाम् ।

**नियतं कुरुकर्मत्वं कर्म ज्यायोह्यकर्मणः ।**
**शरीरयात्रापि च ते न प्रसिध्येदकर्मणः ।**

**अ. ३, ८**

**कर्मैव कारणंचात्र सुगतिं दुर्गतिं प्रति ।।**

एवं सर्वत्र कर्मणोऽवश्यकर्तव्यत्वात्कर्माचरणे सर्वेषांस्त्रीपुरुषाणां समानाधिकारसत्वात् । कर्मानुष्ठानजन्यचित्तशुध्द्यैहिकामुष्मिकफलभोक्तृशक्तिसंपन्नत्वाद्धर्मानुष्ठानफलसिद्धिसत्वाच्च विहितं कर्म सर्वैः सदाऽऽचरणीयामिति ।

## द्वितीयो भागः समाप्तः ।

श्रीः

# शास्त्रबोधे तृतीयो भागः



## अथ वर्णधर्मविचारः

यदि दत्तचित्तश्चेत्प्रतीयत एवमिदानींतना आमरणं यज्जातिविषये कोलाहलमारचयंतः कपोलकल्पितमिथ्याडंबराग्रहाकृष्टमानसा वृथैव परितप्यमाना अंधपरंपराप्रचलितमार्ग एव श्रेयोमार्ग इति मत्वा तन्मतमनुसृत्य भगवत्प्रेरणाप्रणीतवेदस्याविदितरहस्या अज्ञजनमनोमोहकनानाविधजातिं जनयंतो निरस्तसमस्तैहिकामुष्मिकसुखा ग्रीकरोमन्क्याथलिकपार्शीबौद्धजैनशैवशाक्तवैष्णवचार्वाककैस्ता, इत्याभिधानमात्रेण मात्सर्यग्रसिता वैयुक्तिकेन केनापि विवादास्पदेन हेतुना स्वमतं स्वंस्थाप्य निजनिर्मितग्रंथावलिरेव सुप्रमाणमित्याकलयंतो वेदप्रतिपादितधर्ममाघातेनाघातयंतो वेदोक्तधर्मज्ञानां विचाराचारपरिपक्वानां प्राचीनमहर्षीणां ग्रंथेष्वश्रद्धामावहंतो नूतनधर्मस्थापका इति बिरुदांकिताः संतो लोकोद्धारविघातकाः समाचरंति स्वेच्छाचारेण ।

परं च तेषां दुर्निवारणीयोऽमुपहासो धीमतां चित्तं विह्वलयति । न त्वेतावदेव ब्राह्मणधर्मः पौराणिकधर्मः संतधर्मो बौद्धधर्मो ग्रीकरोमनक्याथलिकपार्शीक्रिश्चियनमहम्मदीयधर्माः स्वकीयं तात्विकं रूपं परित्यज्य तथा मुहुर्मुहुः परिवार्तिता अधुनापि परिवर्त्यंते इति ज्ञापयत्यस्मानध्यात्राधिकपाश्चात्यपौर्वात्यानामितिहासः ।

परं वैदिकत्वेनाख्यातोऽयं धर्मः कालत्रयेऽपि निजरूपमपरित्यजन् अद्यावधि यथार्थतया पारदृश्यतऽनुभूयते च । यतो न तादृशो वैदिकधर्मो यादृशो महम्मदीयधर्मः । यथा तद्धर्मोत्पत्तिस्तत्संबंधिसर्वविषयश्च पुण्यपुरुषं भगवंतं महम्मदपैगंबराख्यमेवावलंबते तस्मात्तस्याल्पज्ञजीवननिर्मितत्वकथनात् तस्मिन् मतानां नानाविधपरिकल्पनं सत्यासत्यं च नियतमेव । किंतु वैदिकधर्मस्य नैतादृशी स्थितिः । यथा वेदस्त्वपौरुषेयस्तथा तद्धर्मस्याप्यपौरुषेयत्वात् तद्धर्मोऽनाद्यनंतस्त्रिकालेऽपि यथार्थस्थायी मतैक्यप्रतिपादी सृष्टिनियमानुकूलश्चेति प्रमाणनिदर्शनैश्च प्रत्यक्षयामः । तद्यथा ।

**संगच्छध्वं संवदध्वं संवो मनांसि जानताम् । देवा भागं यथापूर्वे संजानाना उपासते ।**

ऋग्वेदे अष्टमाष्टके.

एवं समस्तवेदेषु मतैक्यं तत्संहतौ काः काः शक्तयः प्रादुर्भवंति । तासां शक्तीनां प्रभावः कथं प्रभवंति

तदैक्यप्रभावेण यल्लाभनिचयः प्रतिपदं प्रतिपादितस्तत्केन पंडितं मन्येनापोढुं शक्यते; । न कस्यापि शक्तिरतो वेदोक्तमार्गमपास्तुं ये प्रयस्यंति तेषां दुर्मार्गानुगामिनामनर्थादन्यस्य कस्यचित्फलस्य लाभो नैव भवितुमर्हति ।

परं केचनानधीतसमस्तवेदशास्त्रा अधीतकाव्यालंकारा अधीतांग्लभाषाश्च यथाकथंचिद्भाषासु व्युत्पत्तिं संपाद्य वैदिकधर्मव्यवस्थां निंदंतस्तासु तासु सभासु निंदापूर्वकमुपन्यसंतो लेखान् विलिखंतो बहुशो दृश्यंते ।

एतेषु केचन प्रचलितजातिमात्रमेवोपनताशेषदुःखानां मूलकारणम् । तथा मानवप्रगतेः श्रेयसश्च प्रतिबंधकीभूतमिति भणंति यतो जन्मसिद्धजातिप्रबोधकनीचोच्चभावो देशोन्नतेः प्रघातको भवतीति विषादमाविष्कुर्वंति । यथाबलं तदुच्छेदनाय प्रयतंते च । परं एतद्विरुद्धभावमंगीकृत्य स्वार्थैकदृष्टिपातिनः केचन जन्मसिद्धजातिवादविरोधिभिरुन्नीतोऽयं मार्गोऽयुक्त इति विचिंत्य जातिमात्रोन्मूलनाय कृतप्रयत्नानां प्रयासमतिशोचनीयदशां प्रापयितुं जन्मसिद्धजातिभेदधीर्दुर्निवारेत्यंतरंगमनुविधाय कृतोद्यमा लक्ष्यंते ।

परमेतैरविचारितरमणीयैः कृतव्यवहारैः वादद्वयवादिभिः प्रतिपादितविषयः कथं कया रीत्या वेदादिसत्यशास्त्रेषु प्रतिपादितस्तद्यथार्थतया अस्माभिर्विविच्यतेऽधुना ।

वेदेषु नृणां प्रकारस्त्वेकएवेत्युपदिश्यते । तथा तेषां गुणानुरू-पमार्यो दस्युश्चेति नामनिर्देशं कृत्वा तेषां कर्माण्यपि निर्दिष्टानि ।

अतुं वेदादिशास्त्रं ज्ञातुं येऽर्हास्त एवार्या इतिएतैरार्यैः परमात्मा संप्रार्थितोऽस्ति दस्युभ्यो ज्ञानं देहीति। तथैव स्वसाम्यं संप्राप्तुमार्यैर्द-स्युभ्यः समुपदिष्टमिति केचन मंत्रा विषयमिमं प्रमाणयंति यथा

सजातूर्भाश्रद्धधान ओजः पुरोविभिंदन्न चरद्विदासीः । विद्वन् वज्रिन् दस्यवे हे-तिमस्यार्यं सहो वर्धयाद्युम्नमिंद्र ॥ यववृकेणाश्विना वयं तेषां दुहंतामनुषाय दस्रा आभिदस्युं बकुरेणाधमंतोरुज्योति-श्चक्रतुरार्याय ॥

ऋग्वेदस्य प्रथमाष्टके.

एवं समस्तऋग्वेदेऽप्यार्यदस्यूनामेवोल्लेखः परिदृश्यते । यद्यपि पुरुषसूक्ते ब्राह्मणादिनामचतुष्टयं श्रूयते " ब्राह्मणोऽस्य मुखमासी-द्बाहू राजन्यः कृतः उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत । इति तथाप्येतादृशमंत्रैस्तत्सामयिकसामाजिकस्थितिकलां प्रवर्धित-मानवसंघस्य सुव्यवस्थाय गुणकर्मस्वभावानुसारतो वर्णव्यवस्थेयं

कल्पितास्तीत्यनुमीयते । परं कुत्रापि कास्वपि वर्णाश्रमधर्मविधायकसंहितासु भेदभावः पक्षपातश्च न दृष्टिगोचरोभवति । प्रत्युत तत्संहितासु परस्परहितप्रापणमैक्यं भूतदया चेत्यादि गुणाः सर्वत्र वर्णिताः संति तद्यथा ।

समानो मंत्रः समितिः समानी समानं मनः सहचित्तमेषाम् । समानं मंत्रमभिमंत्रये वः समानेन वो हविषा जुहोमि । समानीवाकूतिः समाना हृदयानि वः समानमस्तु वो मनो यथा वः सुसहावसति ॥

ऋग्वेदे

हे मनुजा भवतां सर्वेषां मंत्रो विचारः समितिः सामाजिकधार्मिकव्यावहारिकसभाश्चैकभावनया भवंतु । मनः संकल्पविकल्पात्मकमतस्तन्मनो मिथो विरोधावृत्तं मा भूत् । एषां सर्वभूतानां चित्तं चिंतनशक्तिरपि समभावनया अस्तु । एवमेव भवतां आकूतिः प्रयत्नः तथा हृदयानि सर्वत्र समभावनामंगीकृत्य परस्परोपकारकाणि भवंतु । तथैव

सहनाववतु सहनौ भुनक्तु सहवीर्यं करवावहै । तेजास्विनावधीतमस्तु मा विद्विषावहै ॥

## ओं शांतिः शांतिः शांतिः

रक्षणभोजनाध्ययनवीर्यादिविषयेषु सर्वे वयं समाना भूत्वा तेजस्विनोऽद्वेषभावाश्च भवंत्विति मंत्रेऽस्मिन्नुपादिष्टोऽस्ति ॥

**प्रियं माकृणु देवेषु प्रियं राजसु मा कृणु । प्रियं सर्वस्य पश्यत उत शूद्रो उतार्य्यो रुचं नो धेहि । ब्राह्मणेषु रुचं राजसु न स्कृधि रुचं विश्वेषु शूद्रेषु मयि धेहि रुचा-रुचम् । प्रियं मादर्भ कृणु ब्रह्मराजन्याभ्यां शूद्राय चार्याय च । यस्मै च कामयामहे सर्वस्मै च विपश्यते । इति यजुर्वेदे अध्याये २६**

एवं सर्ववेदानामवलोडनेनाथवा आसृष्टेर्ब्राह्मणग्रंथातिरिक्तं महाभारतपर्यंतं यावानितिहासः समुपलभ्यते । तत्संग्रहेणैवं निश्चीयते । सर्वत्र पृथिव्यामार्या नीचोच्चभावरहिता आसन्निति । परंच ब्राह्मणग्रंथकालीनास्तथा पौराणिकाश्च जन्मत एव जाति-प्राधान्यमभिदधानाः परस्परकलहायमाना लोकोन्नतिविघातकाः समभवन् । तद्यथा ऐतरेयादिब्राह्मणग्रंथेषु ब्राह्मणादीनां जन्मसिद्ध-जातिवादः परिदृश्यते ।

ऋषयो वै सरस्वत्यां सत्रमासत ते कवष-
मैलूषं सोमादनयन् । दास्याः पुत्रः
कितवो अब्राह्मणः कथं नो मध्ये दीक्षि-
ष्टेति तं बहिर्धन्वाद्वहन्नत्रैवं पिपासाहंतु
सरस्वत्या उदकंमापादिति । ऐतरेये २-३-१

न त्वेतावदेव किंतु शूद्रसंपर्कस्तैःसह संभाषणमपि निषिद्ध-
मासीदित्येतैर्ब्राह्मणग्रंथैरेवावबुध्यते । यथा

सवै न सर्वेण संवदेत । देवा न वा एष
उपावर्तते योदीक्षते । सदेवानामेको
भवति । ब्राह्मणेनैव राजन्येन वा
वैश्येन वा संवदेत तेहि याज्ञियाः ।

तैत्तरीये ३-१-१-१

प्रथममंत्रे शूद्रकुलोत्पन्नऐलषपुत्रः कवषनामकः पिपासा-
कुलितः सन् सत्रमगच्छत् तत्रत्याः सर्वे महर्षयस्तस्मै जलमप्यदत्वा
सोमयागादपसारितवंत इति । अत एतेषां हृदयाणि शिलादपि
कठिणतराण्यासन्निति प्रतीयते । यतः पिपासापीडिते विप-
न्मग्नेऽस्मिन्नीदृशक्रूरभावप्रदर्शनं नैव विहितम् । तस्मादेवमसं-

बद्धप्रलापयुक्तानां पक्षपातावृतानां समदृष्ट्यभावानां ब्राह्मणग्रंथानामनंगीकार एव चित्तक्षोभस्यानुत्पादकः सुखसंपादकश्चेति प्रतिभाति नः । ननु

**ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।**
**उरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत ।**

अस्मिन् ऋग्वेदोक्तमंत्रे ब्राह्मणादिवर्णानां मध्ये तारतम्यं महदंतरं नीचोच्चभावश्च प्रदर्शितोऽस्ति । कथं तर्हि त्वया निष्पक्षपातो वेद इत्युद्घोष्यत इति चेदवधार्यताम् । अस्मिन् मंत्राकलनेऽनेकैरनेकरीत्या यो भेदभावः प्रदर्शितः । स तु न वेदगतभेदः किंतु मनुष्यबुद्धिगतभेदः । यतोऽस्य मंत्रस्यार्थो न वेदस्य भेदवादं प्रदर्शयति । किंतु देहे यथा मुखमुत्तमांगमिति परिकल्प्यते तद्वद्यः कोप्यधीतसांगवेदोऽधिगतब्रह्मभावो ब्राह्मणः स श्रेष्ठतम इति । तथा बाहू तु देहसंरक्षकौ कार्यसाधनसाहाय्यभूतौ । एवं यो राष्ट्रसंरक्षकः प्रपंचोत्पन्नकलहादिनिवारणे समर्थोऽस्ति स एव राजन्योऽथवा क्षत्रिय इति । तथा उरुशब्दो विस्तीर्णार्थे वर्तते । परं यदा उरुशब्द एव उरस्शब्दार्थे गृह्यते तदा पुरुषस्योरसी यथा सर्वदेहभारं सदा वहतः । तथैव कृषिव्यवहारादिधर्माः सर्वेषां जीवनाधाराः अतएव वैश्यस्य उरुशब्दोपमा प्रदर्शिता । यथा पादावशुचिपदार्थेऽपि स्थापयत्यर्थात् घृणास्पदसेवामप्याभ्यां कारयति । परं नैव तयोः पादयोर्विषये घृणोत्पत्तिः । तथैवाशुद्ध-

व्यवहारयुक्तजननीजनकाभ्यां पादसदृशपितृभ्यां समुत्पन्नो यः कोप्यस्तु स शूद्र इति । अथवा बुद्धिशून्यो हेयादिभावरहितो नीचदासवृत्युपजीवी स शूद्र इति मंतव्यम् । एवं तत्तत्कृत्यानुसारमलंकारपूर्वकं वेदे चतुर्वर्णानां नामनिर्देशः कृतोस्ति । इत्थं सर्वत्र वेदेषु मंत्रा अलंकारपूर्वकमेव वर्णिताः संति । उपरिनिर्दिष्टव्याख्यानमेव समंजसमस्त्यतएव मनुरपि कर्मानुसारमेव जातिपरिवर्तनं निर्णयति । यथा "शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम्" ।

**योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् । स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ।**

एवं भगवान् अथर्ववेदोऽप्यार्यदासादिभेदो न निश्चितः । किंतु व्रतानुसारं परिवर्त्यत इत्याह । यथा

**जातवेदो न मे दासो आर्यो महित्वा-व्रतं मीमाय यदहं धरिष्ये ॥ इति**

तथा गुणकर्मस्वभावानुसृतो वर्णधर्म इति भगवद्गीतायामुपदिश्यते भगवता कृष्णदेवेन ।

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः**

अध्या. ४–१३

एवं स्मृत्यंतरेऽपि सर्वेषां जन्मतः शूद्रत्वमनुसंधाय कृत्यानुसारं ब्राह्मण्यादिकमवतारयति ।

जन्मना जायते शूद्रः संस्काराद्द्विज उच्यते । वेदाभ्यासाद्भवेद्विप्रो ब्रह्मजानाति ब्राह्मणः ।

तथा धर्मशास्त्रप्रवर्तक आपस्तंबोऽपि वर्णधर्मस्य परिवर्तनमाह ।

धर्मचर्यया जघन्यो वर्णः पूर्वं पूर्वं वर्णमापद्यते जातिपरिवृत्तौ । अधर्मचर्यया पूर्वो पूर्वो जघन्यं जघन्यं वर्णमापद्यते जातिपरिवृत्तौ ।

एवमेते ब्राह्मणादिशब्दाः केवलगुणवाचका इति महाभाष्ये पतंजलिमहर्षिणा तेनतुल्यंक्रियाचेद्वतिः इति पाणिनिसूत्रव्याख्यानावसरे सम्यग्बोधितोऽस्ति ।

सर्वे एते शब्दा गुणसमुदाये वर्तंते । ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति आतश्च गुणसमुदाये इति तथान्यग्रंथे

तपः श्रुतं च योनिश्च एतद्ब्राह्मणकारणम्

तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ।

एवं शुक्रनीतावपि ब्राह्मण्यादिनामानि गुणद्योतकानीति प्रोच्यते ।

ज्ञानकर्मोपासनाभिर्देवताराधने रतः ।
शांतो दांतो दयालुश्च ब्राह्मणश्च गुणैः कृतः ।

तथा महाभारतेऽपि ब्राह्मणादिपदस्य वृत्तमेव कारणमिति प्रदर्शितम् ।

ज्ञानविज्ञानसंपन्नः संस्कृतो वेदपारगः ।
विप्रो भवति धर्मात्मा क्षत्रियः स्वेन कर्मणा । एतैः कर्मफलैर्देवि न्यूनजातिकुलोद्भवः शूद्रोप्यागमसंपन्नो द्विजो भवति संस्कृतः । ब्राह्मणो वाप्यसद्वृत्तः सर्वसंकरकारकः ब्राह्मण्यं सुसमुत्सृज्य शूद्रो भवति तादृशः । कर्मभिः शुचिभिर्देवि शुद्धात्मा

विजितेंद्रियः । शूद्रोऽपि द्विजवत्सेव्य इति ब्रह्माब्रवीत् स्वयम् । स्वभावः कर्म च शुभं यत्र शूद्रोऽपि तिष्ठति । विशिष्टः सद्विजातेर्वै विज्ञेय इति मे मतिः । न योनिर्नापि संस्कारो न श्रुतं न च संततिः कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् । सर्वोऽयं ब्राह्मणो लोको वृत्तेन तु विधीयते । वृत्ते स्थितस्तु शूद्रोऽपि ब्राह्मणत्वं नियच्छति ।

महभार. अनुशा, पर्व, अ १४३

अतः प्रतीयते निरस्तसकलहृदयसंघटितमहामोहानिद्राः प्रशांतांतःकरणाः परदुःखापहारिणो भूत्वा निष्पक्षपातेन वेदादिसर्वशास्त्रान् सर्वेभ्यः समुपदिशंतो महर्षयः स्वस्वजीवनं भूपयामासुरिति वेदस्मृतीतिहासादिषु वर्णितवर्णचतुष्टयेन सम्यगवबुध्यते ।

एवं ब्रह्मकर्मापि भगवद्गीतायामनुगीतमस्ति

अध्यापनमध्ययनं यजनं याजनं तथा ।
दानं प्रतिग्रहश्चैव ब्राह्मणानामकल्पयत्

शमो दमस्तपः शौचं क्षांतिरार्जवमेव च
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ।

यः कोपि द्विजः स्वकर्तव्यकर्माणि नाचरति तर्हि महापापी स्यादित्यवगमयति मनुः ।

अतपास्त्वनधीयानः प्रतिग्रहरुचिर्द्विजः
अंभस्यश्मप्लवेनैव सह तेनैव मज्जति

अतो जन्मतः शुद्धिः केषामपि नास्ति किंतूपायांतरेण शुद्धिरित्याह ।

अद्भिर्गात्राणि शुद्ध्यंति मनः सत्येन शुध्यति । विद्यातपोभ्यां भूतात्मा बुद्धिर्ज्ञानेन शुध्यति ।

अतएवैतरेयादिब्राह्मणग्रंथेषु कानिचिद्गुणपरिवर्तनानुसृतोदाहरणानि श्रुतिपथमारोहंति । यथा सत्यकामो जाबालः सत्यसंभाषणेन ब्राह्मण्यं लेभे इति । तथैव छांदोग्योपनिषद्यपि सद्गुणसमावर्तनानुपरं ब्राह्मण्यमिति प्रतिपादितम् । यथा

सत्यकामोह जाबालो जबालां मातरमामंत्रयांचक्रे ब्रह्मचर्यं भवति विवत्स्यामि

किं गोत्रोहमस्मीति । सा हैनमुवाच नाह-
मेतद्वेद तात । यद्गोत्रस्त्वमसि बह्वहं
चरंतीपरिपारिणी यौवनेन त्वामालभे
साहमेतन्न वेद यद्गोत्रस्त्वमासि जाबाला
तु नामाहमास्मि । सत्यकामो नाम त्वमासि
स सत्यकाम एव जाबालो ब्रवीथाः। इति

एवं क्षत्रियकुलोत्पन्नोऽपि विश्वामित्रोऽधिगतसकलविद्या-
वैभवेन जपतपादिक्रियानुष्ठानेन च स्वकीयां तनुं ब्राह्मीं चकार ।
तथा व्याधकुलोत्पन्नोऽपि वाल्मीको वृक्षलतापर्णाच्छादितकुटीर-
कृतवासः कंदमूलफलाशनपूर्वकमाचरितब्रह्मचर्येण लब्धदेदीप्यमान-
देहकांतिर्योगसामर्थ्यादधिगतसमस्तशास्त्रसारो ब्रह्मनिष्ठः सन्
मुनिपदं लेभे । नत्वेतावदेव भगवान् वाल्मीकिरादिकविरिति महागु-
णमहिमोऽभवत् तथा तत्कृत " रामायणग्रंथः " सुशीलसुनीतिसुवि-
चारादिसद्गुणान् बोधयन् भारतमद्यापि गौरवेण द्योतयति ।
एवं वेदव्यासोऽपि कुत्सितंमन्यमत्स्यगंधिन्यामुद्भवः सन् ब्रह्मर्षि-
रित्याख्यं प्राप । तथा तत्कृतमहाभारतब्रह्मसूत्रभवद्गीतानामकग्रंथा
जगच्चकितायमानं कुर्वंतोऽद्यापि भारतं भूषयंति ।

एते ब्राह्मणादिशब्दा गुणकर्मानुगता इति प्रतिपादितमागमवाक्यं
कैय्यटेनापि महाभाष्यटीकायामव्रदातशब्दार्थबोधसमये समुध्दृतमास्ति ।
यथा

त्रीणि यस्यावदातानि विद्यायोनिश्च कर्म च। एतच्छिवे विजानीहि ब्राह्मणाग्रस्य लक्षणम् ।

अनेन कुलपवित्रताया अप्यवश्यकता प्रतीयते । ये केचन कुलमेकमेव सर्वस्य कारणमिति वदंति तत्तुच्छमेव । परं विद्याकर्म-स्वभावादिसद्गुणेष्वेकं कुलपावित्र्यमप्यादरेण गणनीयम् । यते यस्य पितरौ सन्मार्गानुवर्तिनौ तयोः पुत्रोऽपि संस्कारवशात्स्वदेहं पावित्रीकरोति यदि स एव प्रौढावस्थायां दुर्मार्गानुगामी स्यात्तर्हि तत्पवित्रताहानेर्दोषस्तु तस्यैव न पित्रोः ।

एवं शुक्रनीतावपि

कर्मैव कारणं चात्र सुगतिं दुर्गतिं प्रति । न जात्या ब्राह्मणश्चात्र क्षत्रियो वैश्य एव वा। न शूद्रो न च वै म्लेच्छो भेदिता गुणकर्मभिः। ब्राह्मणैस्तु समुत्पन्नाः सर्वे ते किन्तु ब्राह्मणाः । न वर्णतो न जनकात् ब्रह्मतेजः प्रपद्यते।

प्रथमाध्याये

**योऽधीतविद्यः सकलः स सर्वेषां गुरुर्भवेत्**
**न च जात्यानधीतो यो गृरुर्भवितुमर्हति ।**

तृतीयाध्याये

एकस्मिन्समये बुद्धदेवं कश्चन ब्राह्मणः पृच्छति। भो बुद्धदेव त्वन्मते कोवा ब्राह्मणः किंवा तस्य लक्षणमिति । तस्मै भगवान् बुद्धःप्राह

**न जटाहि नगोत्तेहि न जच्चा होति ब्राह्मणः । यन्हि सच्चंच धम्मंच सो शुची सो च ब्राह्मणः**

यः कोप्यापादवर्धितजटाजूटधरस्तथा केवलं पितृपितामहजातिगोत्रालापको नाहं ब्रवीमि तं ब्राह्मणमिति । किंतु यः शीलवान् सद्धर्मनिरतः स एव ब्राह्मण इति ब्रवीमि ।

एवं सर्वथा वृत्तमेव कारणमिति महाभारतेऽपि श्रूयते ।

**न योनिर्नापि संस्कारो न श्रुतं न च संततिः । कारणानि द्विजत्वस्य वृत्तमेव तु कारणम् ।**

तस्मादत्र चमत्कारजनकपदार्थवृंदविभूषिते मनोहारिणि

संसारे व्यभिचाररताः स्वेच्छाविहारिणोऽविहितवृत्तयोऽविद्यागहनांधकारनिमग्नाः सुतरां ब्राह्मण्यं नार्हंतीति फलितं भवति । यानि कर्माणि वेदादिशास्त्रेषु ब्राह्मणानां कर्तव्यत्वेनोपदिष्टानि तानि सर्वथा तैराचरणीयान्येव । अन्यथाऽब्राह्मण्यमेव निश्चितं भवेत् ॥

एवं तर्हि ये पाकादिकर्मधुरंधरा ब्राह्मणनामधारिणः संति । किं न ते ब्राह्मणा इति चेन्न हि ते ब्राह्मणपदार्हाः । यतः पाकादिक्रियाणां दासवृत्तौ गणितत्वात् तत्कर्मणां ज्ञानसंबंधाभावात् तथा तव्दृत्तिमतां सुसंस्कृतचित्तासंभवादनधिगतशास्त्रसारत्वाच्च न ते ब्राह्मणपदवाच्याः ।

ननु पाकादिसेवाधर्मा यदि ब्राह्मणेतराणां भवेयुस्तर्हि शूद्रान्नमनिषिध्दंस्यादिति चेद्भवतुनाम । ये मद्यमांसाहारिणः शूद्रास्तत्कृतान्नमेव सर्वथा हेयम् । परं तेष्वेव शूद्रादिषु त्यक्तमांसादिदुर्व्यवहारैः सुशीलैःशूद्रैः पाकःपचितःस्याचर्हि तत्पाकस्वीकारे न कोऽपि दोषः । तथा प्राक्तनब्राह्मणा वर्णचतुष्टयेऽप्यन्नोदकव्यवहारं कुर्वंतिस्मेति प्राचीनेतिहासोऽस्मानद्यत्वेऽप्यवबोधयति । यथा वशिष्टविश्वामित्रवाल्मीक्यादिब्रह्मर्षयो जनकरामचंद्रयुधिष्टिरप्रभृतयो राजर्षयश्च वर्णचतुष्टयेष्वन्नोदकं सेवयंति स्मेति प्रतीयते ।

तथा भगवान् रामानुजाचार्योऽप्यमुमेव पंथानमनुससारेति तज्जीवनचरित्रेण तथा तत्प्रसिद्धितजगन्नाथादिपुण्यक्षेत्रस्थेनाद्याचधिकपरिपाठेन चानुमीयते । एवं श्रीरामानुजस्य गुरुरपि शूद्रकु-

लोत्पन्न आसीदिति श्रूयते । यथा " विक्रीयशूर्पं विचचार योगी " इति ॥

---

## क्षत्रियः

ऐहिकामुष्मिकसुखसंपादनैकचित्तानां सज्जनानां शरीरेंद्रियमनांसि भूधनाद्युन्मत्तैः परोपद्रवकारिभिः परहिंसाजीवनजीविभिरीर्षाद्वेषासूयादिदुर्गुणावृतैर्नीचोच्चभावाकलितैर्दुर्जनैर्दूयमानानि यथा न स्युस्तथा शांतिस्थितिं स्थापयितुमराजकतां निर्मूलयितुंच क्षत्रिय इति मानवप्राणिषु कृत्यनुसारं विभागः प्रदर्शितोऽस्ति ।

अतएव " बाहूराजन्यः कृतः " इत्यादिमंत्रैरपि बाहूयथा कार्यदक्षौ तथैव क्षत्रियोऽपि वीर्यपराक्रमकांतिभिर्नियुक्त इति विज्ञायते । यतोऽराजकराज्यं दुःखावलीढं भवतीति सुविचार्य विश्वसंरक्षणार्थं अर्थात् सर्वाणि प्राणिजातानि सुखेन कालं नयेयुरितिबुध्या प्राचीनैर्विभागोऽयं क्षत्रिय इति नाम्ना व्याख्यातोऽस्ति । तथा ये शस्त्रास्त्रबलपराक्रमसंपत्या दुर्जनानथवा राजशत्रूंश्च तेजोबलपौरुषाकर्षणेन निःसारतां गमयित्वा अर्थाद्धतप्रायान् कृत्वा लोकोपद्रवनिवारणे कृतप्रयत्नास्त एव क्षत्रिया इति । यथा

**क्षतात् त्रायते क्षत्रिय इति शब्दव्युत्पत्यापि**

**परपरित्राणमेव क्षत्रियधर्म इति निष्कर्ष्यते । अतः क्षत्रियविभागनियुक्तेन राजकीयपुरुषेण सर्वलोकत्राणपरायणवीर्यशक्तिर्विधेया ॥**

एवं क्षत्रियस्यायं परमधर्मः "युद्धं स्वधर्मो नृपतेः प्रजानां परिपालनम्" इत्यादि शास्त्रवचनैः स्वस्वधर्मतया कर्तव्यत्वेन प्राप्तस्य क्रियाया आचरणेनार्थात् प्रजारक्षणादिसत्कार्यैश्चित्तशुद्धिं संपाद्यांतिमावस्थायामंतिमाश्रममंगीकृत्याधिगतज्ञानवैभवः सन् मुक्तो भवेदिति संक्षेपतः क्षत्रियधर्मः ॥

परं " कलावाद्यंतावेव स्तः " इत्यादिवाक्यानि प्रमाणीकृत्य केचनाचार्यनामधारिणः कलौ क्षत्रिया एव न संतीति प्रलपंति । किंबहुना वय ब्राह्मणा अन्ये सर्वे शूद्रा अंतः अन्यैः सर्वैः ब्राह्मणनामधारिणामस्माकं सेवा कर्तव्या यतो वयं सेव्या अन्ये सेवकास्तस्मान्मिथः सेव्यसेवकभावएवविहित इत्यादिदुरालापैः सर्वदा स्वार्थमेव साधयंतो दृश्यंते । किंतु मानवोन्नतिकांक्षिभिः सर्वदेदृशवाक्यानि हेयानीति मत्वा प्रथमाश्रमे सर्वैरधीतसकलवेदशास्त्रविद्यैः स्वस्वाभीष्टानुसारं वर्णविभागोऽयं स्वीकर्तव्यः ॥

---

## वैश्यः

विश–प्रवेशने इतिधात्वर्थपरिशीलनेन ब्रह्मक्षत्रादिसर्वमनुजा यस्मिन् समाविशंति अर्थात् सर्वे लौकिकजीवनार्थं यमाश्रित्य जीवंति स वैश्य इति । यतो वैश्याः ( वणिजः ) कृषिवाणिज्याद्युद्यमैर्लब्धधनधान्यसंपत्या लोकान् पश्वादींश्च पालयंति । अतो " वैश्याधारं जगत्सर्वम् " इति लोकप्रसिद्धिः सार्वजनीना । तस्माद् ये वैश्या भवितुकामाः संति । ते अधिगतवेदशास्त्रसाराः कलाकौशल्यशिल्पाद्युद्यमरता व्यापारनिपुणाः संतः पशुसंरक्षणकृषिकर्मादिव्यवसायासक्त्या कालं नयेयुरिति । इयमेव वैश्यवृत्तिरिति मनुरप्याह ।

" पशूनां रक्षणं दानमिज्याध्ययनमेव च
वणिक्पथं कुशीदं च वैश्यस्य कृषिमेवच ॥

तथा पूर्वस्मिन्काले एते वैश्यनामधारिणः देशाद्देशांतरं गत्वा स्वबुद्धिप्रभावपूर्वकाविरचितचमत्कारजनककलाकौशल्यविद्यया संपादितवैभवा भारतं देदीप्यमानं चक्रुरित्यवगम्यते । तथा महाभारते सभापर्वणिवर्णितमायासुरविरचितसभा विश्वकर्मनिर्मिता दशकंठपालिता सुवर्णमयी लंकापुरी सद्धर्मोद्दीपनार्थंकृतप्रयत्नस्य राजराजेश्वरस्याशोकस्य चतुष्कोणेऽप्यशीतिस्तंभाधिष्ठितसभामंडपो विजयनगरस्य नगररचनाचातुर्यं पंपापुरस्थदेवमंदिराणि चौडश्यदानपुरस्थमहत्तरशिलास्तंभो जगद्गुरुशिवदेवदेवालयश्च तथा

तत्र तत्रान्यानि शिलामयानि बहूनि मंदिराणि च भारतीयप्राचीनकलानिर्माणचातुरीं द्योतयंत्यद्यापि । नत्वेतावदेव रामायणादिवर्णित विमान विषयककथा धूम्रनौर्धूमयंत्राणि कस्य वा चेतसि चमत्कारं न जनयेयुरतत्तत्कालीनवैश्यानां शिल्पशास्त्रज्ञता तथा कृषिकर्माभिवर्धककावेरीभागीरथ्यादिनद्युध्धाटितकृत्रिमनदीसरोवरकुल्यादय । ( कालवे ) कस्य वा हृदि धन्यवादं नोत्पादयंति यत एतैरद्यत्वेऽपि प्राणिजातं सुखेन कालं नयति एवं प्राचीनशुक्रनीतावपि कुल्यादिनिर्माणविषयोऽयं वर्णितोऽस्ति । यथा "तस्य वृध्द्यै तडागं वा वापिकां कृत्रिमां नदीम्" इति

तथा आधुनिका दशपंचदशक्रोशस्थजनविध्वंसकबंदूकतोफेत्यादीन् विरचयंति । तद्वत्प्राचीना अतितीक्ष्णशस्त्रादीन् विरचय्य आग्नेयास्त्रवायव्यास्त्रमोहनास्त्रशतघ्नी(तोफ ) भुसुंडी ( बंदूक इत्यादिनामभिर्निर्दिश्य व्यवहरंतिस्मेति ज्ञायते । तथा वाल्मीकिरामायणे ।

"सर्वयंत्रायुधवती शतघ्नी शतसंकुला"

इत्ययोध्यापुरी शतघ्न्यादिसर्वायुधैर्मंडिता संरक्षिता चासीदिति वर्णितास्ति । एवं महाभारतयुद्धपर्वण्यपि शस्त्रास्त्रवर्णनं दृश्यते । एवं वेदेऽपि नौकादिजलयानरचनावर्णनं रामायणादिषु पुष्पकादिविमानैः संचारश्च बहुशस्सुल्लेखितोऽस्ति । यथा

तुग्रोहभुज्यमश्विनोदमेघे रयिं न कश्चिन्ममृवां आवाहः

इत्यादयो मंत्रा ऋग्वेदस्य प्रथमाष्टके प्रोक्ताः संति ॥

यद्यप्यद्यत्वे तेषां रचनाध्ययनादिपरंपरा प्रच्युतास्ति तथापि न केनापि पंडितंमन्येन वक्तुं शक्यते प्राचीना भारतीया अज्ञातनौकाविमानादिरचनाकलाविषया इति । तस्मादधुनिका वैश्या अपि निर्भयं निःसंकोचं देशाद्देशांतरं गत्वा कियता मूल्येनायं पदार्थः क्रीतश्चेत् लाभकरो भवेत्तथा स्वराष्ट्रीयपदार्थोऽपि राष्ट्राद्राष्ट्रांतरप्रेषितो गमनागमनव्ययमपनीय कियल्लाभदायको भवेदिति सुविचार्य मूलधनमनुच्छिंदन् कृतव्यापारो भवेदिति । ये विशेषतो जलपर्यटनादिकं कृत्वा तत्तद्देशस्थस्थितिं विदुः त एव सर्वस्मिन् स्थले क्रयविक्रय निर्णयकारो भवेयुरिति यथाह मनुः

समुद्रयानकुशला देशकालार्थदर्शिनः ।
स्थापयंति तु यां वृद्धिं सा तत्राधिगमं प्रति

अध्याय ४

एवं महाभारतेऽपि श्रूयते ।

वणिग्यथा समुद्राद्वै यथार्थं लभते धनम् ।

शांति पर्व अ. २९९

परं प्राचिना धान्यवस्त्रादीनां क्रयविक्रयविषये राजशासनं स्वप्नेप्यनपेक्ष्य तत्तद्देशीयवैश्यजनसंघैरेव समयानुसारं निश्चिन्वंतिस्मेति प्रतीयते । पश्य, तावदद्यत्वेऽप्यमेरिकदेशीया राजाज्ञामनभिचिंत्य स्वस्वसंघबलेन लघुवृध्धी कल्पयंतः पृथिव्याः समस्तव्यवहारं

स्वहस्तगतं कृत्वा वैभवशिखरारूढाः कथं सुखेन कालं नयंति । अतएव शास्त्रज्ञैरपि सुष्ठूक्तं संघशक्तिः कलौयुगे इति । तस्माद्बांधवा भवद्भिरपि प्राचीनैर्वैदिकैरनुसृता संघशक्तिरधुनाप्यनुकरणीया खलुापरं ये समुद्रयानमेव निषिद्धमस्तीति जल्पंति तेषामुक्तिः सर्वथा हेया प्राचीनशिष्टाचारविरुद्धा चेति मंतव्यम् । यतः प्राचीनैर्ब्रह्मक्षत्रवैश्यशुद्रादिभिः समुद्रपर्यटनमाचरितमिति महाभारतादीतिहासोऽत्र बोधयति । युधिष्ठिरेणाश्वमेधराजसूयादियज्ञार्थं चीनपातालादिराष्ट्रनरेशा आहूता इति । एवं लंकेश्वरं हंतुं श्रीरामचंद्रेण कृतसेतुबंधनं तथा समुद्रमुल्लंघ्य यल्लंकापुरी स्वायत्तीकृता तत्को वा न मनुते । तथाच कैर्वा न ज्ञायते समुद्रमध्यस्थलंकां गत्वा देवर्षिःपरमसिद्धो रेवणाराध्ययोगीश्वरः ( रेणुकाचार्यः ) शिवलिंगज्ञानप्रदानेन विभीषणं कृतार्थं चकारेत्यादिशिष्टाचारप्रमाणैर्न केषामपि समुद्रोल्लंघने दोषः प्रतिबंधश्च ।

अतो वैश्याः कलाकौशल्यशिल्पशास्त्रादिज्ञानाभिवृध्यर्थं कृषिकर्मव्यवहारादिषु नैपुण्यं संपादयितुं परदेशपर्यटनं कृत्वा अधिगतज्ञानवैभवाः सर्वसंसाराधारभूतां वैश्यवृत्तिमभिवर्धेरन् इति सर्वथा अभिलषामः ।

पृथिव्यां सांप्रतं गवादिपशूनां दुर्गतिः प्रतिदिनं वर्धमाना दृश्यते । शतवर्षेभ्यःपूर्वं कृषिकैर्वृषभो यद्विंशतिरूप्यकाणां मूल्येन क्रियतेस्म । तत्सांप्रतं पंचाशदवाधिगतोऽस्ति । यतो दुर्जनैः क्रियमाणपशुहिंसादौ कृतदुर्लक्षावैश्याः। तद्दुर्लक्षस्य फलमिदम् । अतोवैश्याः

पशूनां दुस्थितिनिवारणार्थं स्थितपूर्वाणांगोशालादीनां यथोन्नति-संस्कारणं अभिनवानां स्थापनंच कुर्वंतस्तूपर्युक्तसर्वकर्मानुष्ठानेषू-त्पन्नकर्तव्यताबुद्धयो वैश्यनामार्हा भूत्वा सुखेन जीवेयुरित्याशास्महे ।

---

## " शूद्रविषयः "

सर्वेषां जगदीश्वरस्य पुत्रत्वाधिकारसत्वात् स्वतंत्रसुखमनुभवतः परकीयजनान् स्वाधीनं विधातुं नास्ति कस्याप्यधिकारः संसारेऽस्मिन् । सर्वेषां समानाधिकारत्वादेवोदारचरिताः पुरुषा वसुधैवकुटुंब-कमित्यैक्यं विदधते । परचेदानींतना बहवो महियांसो निपुणं निरूपयंति काचन शूद्रनामकजातिः कदापि सेयं जातिः स्वातंत्र्येण स्थातुं नार्हति सर्वदा परतंत्रेयं जातिरिति निरपत्रपं निःसंकोचं निर्भयं तान्निजदासभावेन भावयितुं तेषां स्वातंत्र्यलाभं विद्यादिप्रगतिंच सर्वथा निर्मूलयितुं कृतारंभा इति । यदिते षामिष्टापत्तिरेव स्यात्तर्हि जितं कलिना सर्वथेदं कालिकालस्य साम्रा-ज्यमिति नूनं वदामः ।अयि महाभागाः स्वैरं तत्त तत्त मनसि प्रतिभातं किमर्थमाचरत किमर्थं नैजंपवित्रं जन्मस्थलं भारतं दूषयथ ।युष्मदी-यदुर्भावमुच्छेदयत । यतः सवैर्ज्ञानप्राप्त्यै यावदायुषं यथाबलं प्रयति-तव्यमस्ति । मुख्यतो मानवीसृष्टिरपि ज्ञानसंपादनार्थमेव प्रेरिताऽस्ति। अतः किमर्थं भवद्भिरीश्वरस्यानुशासनं प्रतिक्षिप्यते येन केनाप्यसं-बद्धप्रलापिनोक्तवाक्यमेव बाबावाक्यमिव प्रमाणमिति किमर्थं

विश्वस्यैते भवत्सु विचारस्वातंत्र्यं नास्ति किमु। विचारस्वतंत्रस्य नष्टत्वा देव देशोद्दुर्दशां समुदपद्यत । यावद् भवंतो वसुमतीं समस्तां अतिविततमतीं संतानततिं न कुर्युस्तावद्देशे सुखपरंपरा कदापि न समेधेत। यस्मिन् देशे ये सर्वेजनाः समानादरास्तएव धन्याः स देशोपिधन्यएव । अतो जात्यभिमानजनितपक्षपातं दूरं विहाय सुविचारसौजन्येन भारतीयाः समाचरेयुरिति।ये ब्रह्मक्षत्रवैश्यवृत्यनभिज्ञा विवेकविधुराः अभिधीयतेऽपि कर्तुमसमर्थाश्च संतः केवलं परिचर्यात्मकं कर्म कर्तुमर्हास्तएवशूद्रा नतु गोत्रादिनेत्यवगंतव्यम्। यथामतिपावनोऽयं भगवतो बुध्धस्योपदेशः धम्मपदे ।

न जटाहि नगोत्तेहिं न जच्चाहोति ब्राह्मणः
यन्हिसच्चं चधम्मंच सो शुची सोच ब्राह्मणः—
न चाहं ब्रह्मणं ब्रूमि योनिजं मत्तिसंभवम् ॥

तथा गोत्रजटादीन्येव ब्राह्मणलक्षणानीत्यालापकं ब्राह्मणं प्रत्याह भगवान्जगदुद्धिर्धीषुर्बुद्धदेवः पालिभाषायाम् ।

" किं ते जटाहि दुम्मेध किं ते अजिन-
शाटिया । अभ्यंतरं ते गहणं बाहिरं
परिमज्जसि ॥

बाह्याभ्यंतरशुचिर्भूत एव ब्राह्मणो भवितुमर्हे इति श्लोके-ऽस्मिन् सम्यगुपदिश्य पुनरपि गुणाः पूजास्थानमिति बोधयन् विशेषतः प्राह ब्राह्मणलक्षणं ।

यस्य कायेन वाचाय मनसा नत्थि दुक्कतं ।
संवुतं तीहि ठानेहि तमहं ब्रूमि ब्राह्मणम् ॥
यस्य रागो च दोसो च मानो मक्खो च पातितो । सासपोरिव आरग्गा तमहं ब्रूमि ब्राह्मणम् ॥ अक्कोसं वधबंधं च अदुट्ठो यो तितिक्खति । खंति बलं बलाणीकं तमहं ब्रूमि ब्राह्मणम् ॥

एवं मनुनापि वृत्त्यनुसारं ब्राह्मण्यादिकमिति प्रोच्यते ।

शूद्रो ब्राह्मणतामेति ब्राह्मणश्चैति शूद्रताम् ।

एवं भगवान् वाल्मिकिरपि शूद्रस्य विद्याध्ययनाधिकारं प्रदर्शयन् अधीतशूद्रोऽपि गौरवार्हो भवतीत्याह । "पठन् द्विजो वागृषभत्वमीयात् स्यात् क्षत्रियो भूमिपतित्वमीयात् । वणिग्जनः पण्यफलत्वमीयात् । जनश्च शूद्रोऽपि महत्वमीयात् ॥

वा. रा. उत्तरकांडे ।

एवं वृद्धगौतमोऽपि शूद्राणां जपतपादिक्रियानुष्ठानाधिकारं प्रदर्शयति ।

**ब्राह्मणः क्षत्रियो वैश्यः शूद्रोवा चरित-व्रतः । गायत्रीं मम वा देवीं सावित्रीं वा जपेत्ततः ॥**

इत्याद्यार्षवाक्यप्रमाणैः स्वानुष्ठितसुगुणदुर्गुणानुरोधं ब्राह्मण्यादिकमिति निश्चीयते । अतो ये काचन शूद्रनामकजन्मसिद्धजातिरस्ति तथातज्जात्युत्पन्नानामध्ययनाधिकारोनास्तीति वदंति तेषामुक्तिर्हेया असंबद्धा चेति सुस्पष्टमेव भाति । तस्मान्मरणांतं केषामपि शूद्रत्वं नास्तीति मत्वा कृतलिंगधारणदीक्षोपनयनादिसंस्काराः संतो येऽधिगतब्रह्मज्ञानवैभवा भवंति ते सर्वे ब्राह्मणा इति । ये राष्ट्रपरिपालनादिकार्यनिरता अधीतविद्यास्त एव क्षत्रिया इति । तथा ये कृषिव्यवहारादिकुशला अधीतशास्त्रास्ते वैश्याः । ये कृतसंस्काराः कृतप्रयत्ना अपि विद्याबुद्धिरहिताः परबुद्धिचोदितकर्मकर्तारो दासवृत्याऽऽमरणमनुजीविनस्ते विशालकुलसंभवा अपि शूद्रनामार्हाः । तथा ते शूद्रा इत्येव संबोध्याः—

परं "एनिबिसंटेति" आंग्लदेशीयविदुषी पूर्वास्मिन् काले ब्रह्मचर्याधिकारो भारते सर्वेषां नासीदिति प्राह । तन्न यतः

**शूद्राणां ब्रह्मचर्यत्वं मुनिभिः कैश्चिदिष्यते ॥**

याज्ञवल्क्य योग० अ. २

## शूद्राणामदुष्टकर्मणामुपनयनम् ॥ समान ब्रह्मचर्यम् ।

पारस्करगृह्यसूत्र का. २ आपस्तं सू. ४।१५

त एते वर्णाश्रमधर्माः प्रतिमनुष्येषु नियताः संतीति मद्विश्वासः । यथा मनुष्यस्य बालतरुणवृद्धांतिमा इति चतस्रो अवस्थाः सृष्टिनियममनुसृत्य वर्तंते तद्वत् तदवस्थापूर्वकं परिगणितोऽस्ति वर्णाश्रमधर्मः । यथा बाल्यावस्था अष्टवर्षपर्यंतं । यतः तदवस्थाया अज्ञत्वावृतत्वात् सद्विद्याग्रहणीयत्वात् शूद्र इति संभाव्यते । तारुण्यावस्थायां पदार्थादीन् ज्ञातुं शक्नोति । अर्थात् व्यावहारिकविषयान् जानाति अतस्तस्यां व्यवहारादिनैपुण्यस्य संपादनीयत्वात् तद्वैश्य इति कत्थ्यते । यदा पदार्थज्ञः संजातस्तदा तत्पदार्थसंरक्षणे तत्संगृहार्थं च शौर्यधैर्यचापल्यादिगुणा संवरणीया भवंति तदा तस्या अवस्थाया नाम क्षत्रिय इति । तदनंतरं कृतसंगृहपदार्थानवबुध्यानुभूय च तेषां यथार्थज्ञानं संपादयंत्यतस्तदवस्थाया नाम ब्राह्मण इति नाम्नाऽभिधीयते । अर्थात् सर्वपदार्थानां ब्रह्मनिर्मातृकत्वात् तज्ज्ञानमेव ब्रह्मज्ञानं तज्ज्ञान्येत्र ब्राह्मणो ब्रह्मज्ञश्चेति । एवमेवाश्रमाविचारोऽप्यवगंतव्यः ॥

नूनमेते वर्णाश्रमधर्माः प्रतिमनुष्याश्रिता अतः सर्वैः परिरक्षणीयास्तथा समधिगतानां क्षेमकराश्चेति सुधयोऽभिप्रयंति । यथा

बालतरुणजरांतिमावस्थाचतुष्टयं सर्वेषां मानवानामस्त्येव । तद्वत् वर्णाश्रमाधिकारः सर्वेषां स्त्रीपुरुषाणामस्त्येव । एवं सर्वेषां समानाधिकारत्वं शास्त्रे गर्जति सति "एनिबिझंट" इति विदुषी पूर्वं समानाधिकारो नासीदिति लिखति । परमनयाविदुष्या शास्त्रानभिज्ञतयैवं लिखितमिति मत्वा सर्वे ब्रह्मचर्यपूर्वकमधिगतविद्यावैभवाः संतस्त्वैहिकामुष्मिकसुखमनुभवेयुरित्याशासेऽहम् ॥

## तृतीयो भागः समाप्तः ॥



॥ श्रीः ॥

# शास्त्रबोधे चतुर्थोऽध्यायः ।



## अथाश्रमधर्मो विविच्यते ।

### तत्रादौ प्रथमाश्रमः ।

सुखदुःखमोहात्मके सत्वादिगुणविकारे जीवोपभोग्यहेतुभूते कार्यरूपे जगत्प्रपंचे देहारंभहेत्वदृष्टकर्मयोगितया स्त्रीपुरुषयोः संयोगनिमित्तेन सत्वरजस्तमोगुणविशिष्टशुक्रशोणितांतर्गतो जीवात्मा गर्भाशयं समाविशति । तदेतच्छुक्रशोणितं शीतोष्णानिलैः प्रतिदिनमीषदीषच्छोष्यमाणं घनीभूतापिंडाकारेण कतिपयदिनानंतरं हस्तपादाद्यवयवाकृतिभिर्भासयन् दृश्यते । यथा सुश्रुताचार्यः प्राह—

" द्वितीये शीतोष्णानिलैरभिपच्यमानो भूतसंघातोद्घानो जायते ।" तथा " प्रथमे मासि संक्लेदभूतो धातुविमूर्च्छितः । मास्यर्बुदं द्वितीये तु तृतीयेंऽगेंद्रियैर्युतः ॥ "

इति याज्ञवल्क्यो ब्रवीति ।

तथा सप्तमे मासि पूर्णेंद्रियैः पूर्णप्राणैर्युक्तोऽष्टमनवमादि-मासे सूक्ष्मयंत्रसुषिरेण वायुना प्रेर्यमाणः सपिंडो बहिर्निःसरति । तद्दिनादारभ्य पितरौ शिशुरयं कथं पारयेत्प्राप्तसंसारसागरमिति चिंतातुरौ तस्य शरीरबुद्धिमनांसि दृढयितुं संस्कर्तुं च यथाशक्ति-प्रयतेतामिति ।

बाल्ये पंचवर्षयावत् जनन्या हठदंभानृतकठोरवचनान्वितो-ऽशक्तो रोगी मंदधीश्च यथा शिशुर्नभवेत्तथा शिक्षणीयः । परं न कदापि तर्जयेत्कुतूहलेन कृतापरिचितविषयप्रश्नं बालकम् । किंतु यथायोग्योत्तरं दत्वा प्रोत्साहयेत् । यतो 'नास्तिमातृसमोगुरुः' इति महाभारते मातुर्गुरुत्वातिशयप्रतिपादनात् पुत्रस्य विद्यावर्ध-नादिविषये मातैव मूलाधारत्वाच्च मातैव प्रथमगुरुः श्रेष्ठासन्माननी-याऽस्ति । एवं मनुरप्याह ।

"उपाध्यायान् दशाचार्य आचार्याणां शतं पिता । सहस्रं तु पितॄन्माता गौर-वेणातिरिच्यते ॥"

तथैवाष्टमवर्षपर्यंतं पुत्रोपि जनकेन मितभाषणविनयसु-शीलादिसद्गुणान्वितः शांतसौम्याद्यवस्थापरिवृतो यथाभवेत्तथा शिक्षणीयः । यतः शांत्यादयः प्रबलशक्तयो बाल्य एव स्तोकप्रयत्नसाध्या भवंति । बालकस्य शारीरिकवाचिकमानसिक-बौद्धिकादीनामुन्नत्यौन्नत्योः कारणीभूतौ पितरावेव स्तः । अतएव

माता वैरिःपिता शत्रुर्येन बालो न पाठितः । इति मातापितृभ्यां पुत्रोन्नतिरवश्यं चिंतनीयेति सूच्यते ।

अष्टवर्षानंतरं पिता बालकमाचार्यसमीपेऽथवा विद्यालये चाध्ययनार्थं प्रेषयेत् । तथैव शास्त्रमप्याज्ञापयति ।

**आचार्ययोनिमिह ये प्रविश्यभूत्वा गर्भं ब्रह्मचर्यं चरंति । इहैव ते शास्त्रकारा भवंति विहाय देहं परमं यांतियोगम् ॥**

**" ब्रह्मचर्यं त्वाविद्याग्रहणात् । अष्टाचत्वारिंशद्वर्षाणि पादोनम् "**

इति वात्स्यायनापस्तंबादिमुनीनामुक्त्यनुरूपं बालकस्त्वारोग्य सदसद्विवेकात्मबलविचारस्मरणशक्त्याध्यभिवृध्यर्थमाचतुर्विशंतिवर्षं ब्रह्मचर्येण स्थित्वा । गुर्वाज्ञानुसारमधीतसकलविद्यो यदिभवेत्तर्हि सकलसुखविशिष्टः सन् कीर्त्यते जगति ।

बालकस्य पितरावाचार्यश्चैते त्रयएव देवभवनायां पूज्याः संति । तथैव त्रयः पुरुषस्यातिगुरवो भवंति । माता पिता आचार्यश्चेति विष्णुस्मृतौ प्रोच्यते । यतो माता नवमासं यावत् गर्भं धृत्वाऽसहनीयदुःखानि सोढ्वा स्वशरीरपोषणं चापि दुर्लक्षीकृत्य मत्पुत्रोऽयस्सुखी दुःखीत्येवमहर्निशं विचिंत्य तदर्थं कृतोपाया भवति । तस्मादेव वेदे मातृदेवोभव इति माता देवतास्वरूपेण गणितास्ति । तथा पितापि जन्म-

दातास्त्यतः 'पितृदेवो भव' इति पिता देवस्वरूपेण भावितोऽस्ति। एवमाचार्योऽपि ज्ञानदाता अस्त्यतो "आचार्यदेवो भव" इति तथा "गरीयान् ब्रह्मदः पिता" इत्याचार्यस्य सर्वश्रेष्ठत्वं मनुराह । अतः सर्वमेतत्स्मृतिपथमारोप्य यः सार्थयति । स एव बालो धन्यः पुरुषार्थसाधकश्चान्यः कुलघ्नो भूभारभूत इति ।

अष्टवर्षानंतरं पिता "हितोपदेष्टाशिष्यस्य सुविद्याध्यापकोगुरुः" इत्युक्तलक्षणसंपन्नगुरोः सकाशेऽध्ययनार्थं संनिधापयेत् तथा मत्पुत्रः किमधीते कथमाचरतीति वारंवारं परिशोधयेत् । एवं मनुरप्याह ।

**पुत्राश्च विविधैः शीलैर्नियोज्याः संततं बुधैः**
**नितिज्ञाः शीलसंपन्ना भवंति कुलपूजिताः ।**
**यत्र स्त्री यत्राकितवो यत्र बालोऽप्रशासितः ।**
**तद्गृहं क्षयमायाति भार्गवो हीदमब्रवीत् ॥**

तथा पुत्रवत्पुत्र्यपि शिक्षणीया भवति । यतो द्वयोः समानाधिकारत्वादेकरूपत्वाच्च । एवं महाभारते अनुशासनपर्वेऽपि वर्ण्यते । "यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा" इति ।

परं गुरुजनाभिवंदनं सर्वेषां स्त्रीपुरुषाणां विहितकर्मेति लोकशास्त्रानुरूढिः । तथा विनयसुशीलत्वादिगुणाः सुसंस्कारद्योतका भवंति । बाह्ये यथा संस्कारस्तथांतरंगेपि संस्कृतोभवत्यतः सुसंस्कारार्थं यत्नः कार्यः । यदिगुरुजनेषु पूज्यबुद्धिर्नातिष्ठेत्तदा तैर्बोधित-

विषयोऽपि मनस्यादरेण संलग्नो न भवति । पूज्यबुद्धियुतो दत्तचित्तः सन् विषयग्रहणेन तद्विषयसुखं संपादयति । अन्योऽनादरबुद्ध्या-चंचलचित्तः सन् विषयफलं न भुनक्ति अतो गुरुजनेष्वादरबुद्धिर्युक्तैव अभिवादनसेवादिधर्मा नैसर्गिकगुणा इति यथोक्तं मनुनापि ।

" ऊर्ध्वं प्राणा ह्युत्क्रमंति यूनः स्थविरआ-
यति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान्
प्रतिपद्यते ।

एवं स्वभावमनुवर्ण्यतत्फलमप्याह ।

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धंते आयुर्विद्या यशो बलम् ।

एवंच भगवता बुद्धेनाप्यनुगीतमस्ति पालिभाषायाम् ।

यं किंचियिट्टं बहुतवलोके संवच्छरं यजेथ
पुञ्यपेक्खो । सुब्बं पितं न चतुभागमेति-
अभिवादना उज्जुगतेसु सय्यो ॥ आभिवाद-
नशीलस्य निच्चं वद्धायचायिनो । चत्तारो
धम्मावड्ढंति आयुवण्णो बलं सुखम् ॥

तस्माद्वंदनादिः शिष्टाचार इति मत्वा तमनुचरेत् ।

गुरुणाप्यागतशिष्यस्य बुद्धिबलादिकं संपरीक्ष्यास्यावधारण-शक्तिः कीदशी कथं कं विषयमयं धार्योऽस्तीति समवलोच्य तदनु-

कूलविषयकथने प्रवर्तितव्यम् । तथा कृतंचेदेव सोऽयं स्वविषयपारं गंतुं प्रभवेदन्यथा तद्बुद्धिविरुद्धविषयप्रवचनेन यावदायुषं विज्ञानं तस्य न भवेत् अतो गुरुणावश्यं शिष्यबुद्धिः परीक्षणीया विषयानुसंधानार्थं सुलभशिक्षापणालीं विरचय्य बालकः स्वमातृभाषायामेव शिक्षणीयः । यतो जन्मारभ्य बाल्ये मातुः संसर्गात् तद्भाषायां तस्य गतिः सरलभूतास्ति । तथा तद्भाषायां विवेचितविषयमनायासेन वेत्ति । विस्तृतविषयभावान् यथापूर्वं प्रकटयति । अन्यथाभाषायाअनभिज्ञत्वात् विषयज्ञानानुसंधाने नखाग्रछेद्यं वस्तु कुठारछेद्यमिव भवति । अतः स्वस्वमातृभाषायामेव शिक्षणमनुत्तममिति निश्चीयते । गुरुरपि सत्यासत्ययोर्ग्रहणाग्रहणविवेचनपुरस्सरं सम्यगवबोधयेत् । शिष्यजन्मसाफल्यं गुरुणैव भवितव्यमतः शिष्येणापि गुरूक्तिमनुष्ठाय स्वजन्मनः सार्थकं कार्यं तस्मादुभाभ्यामपि परस्परं विवेकपूर्वमाचरणीयमिति । ब्रह्मचर्यपूर्वकं विद्याध्ययनस्य सर्वत्र स्तुतत्वात् ब्रह्मचर्यं ज्ञानसंपादनस्य मूलाधारत्वात् शरीरबद्धः सन्नेव अधीतशास्त्रोभवेत् । अर्थादासमाप्तिविद्याध्ययनस्य इंद्रियनिग्रही भवेत् ।

इंद्रियाणि तत्तद्विषयेभ्यो यदिरुध्यंते चेत्तेषां व्ययाभावात् स्थिरीभूतानि भवंति । " **ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः** " इति महर्षिपतंजलिसूत्रितसूत्रानुसारं वीर्यलाभेन स्मरणविचारादिशक्तिविकासस्तथाबुद्धिश्चवर्धते । तत्प्रभावेण संपूर्णविद्यां शरीरदृढतां गतो नैश्चल्यं च प्राप्नोति । यथा नदी प्रवाहेण कृशतरा

दृश्यते । सैव प्रतिरोधितप्रवाहा स्यात्तदाऽपरिमितागाधजलसंच-येन गभीरा भवति । तद्वदिंद्रियाणां स्थितिरिति । यथाज्ञापयति भगवान् वेदोऽपि !

"अर्वागन्यः परो अन्यो दिवस्पृष्ठाद्गुहा निधीनिहितौ ब्राह्मणस्य । तौ रक्षतितपसा ब्रह्मचारी तत्केवलं कुणुते ब्रह्मविद्वन् ॥

अथर्ववेदे ११-५-१०

"ब्रह्मचारी ब्रह्मभ्राजद्बिभर्ति तस्मिन् देवाअधिविश्वे समोताः । प्राणापानौ जन-यन्नद्व्यानं वाचं मनोहृदयं ब्रह्ममेधाम् ॥

अथर्ववेदे ११-२

तथा ब्रह्मचारी न कांचन आर्तिमार्च्छति इति शतपथब्राह्मणे ब्रह्मचर्येण तिष्ठतो न कापि शरीरपीडा भवतीति प्रोच्यते ।

" ब्रह्मचर्येण तपसा राजा राष्ट्रं विरक्षति । इति राजा यदि जितेंद्रियस्तर्हि इंद्रियस्थैर्येणाव्यग्रचित्तो निष्पक्षपातश्च भूत्वा-ऽन्याय्यंकदापि नाचरति यत्रनास्त्यन्यायोत्कर्षस्तत्रप्रजाक्षोभोप्यसंभव एव । तस्मान्मनुष्यमात्रप्राणिभिरिंद्रियाणि जेतव्यान्येव । अत एव " समानं ब्रह्मचर्यम्" इत्यापस्तंबोक्तिः । वीर्यस्य लाभाला-भौ सर्वेंद्रियाण्यावृत्य तिष्ठतः । अतीव मनोहरविषयश्रवणेन नेत्रा-

नंदकरवस्तुप्रदर्शनेनातिकटुवाम्लादिपदार्थभक्षणेन त्रिषय-संपर्केण च वीर्यपतनं भवति । यथा जन्मांधस्य स्वप्नेपि प्रत्यक्षतः स्त्रीदर्शनं नास्ति । तथापि देहाय स्त्रीसंसर्गेसंजाते सति झटिति वीर्यहानिर्भवति । अतएव वीर्यनाशस्याष्टदोषा अभ्युपेताः शास्त्रे ।

" स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणं ।
संकल्पोध्यवसायश्च क्रियानिवृत्तिरेव च ।
एतन्मैथुनमष्टांगं प्रवदंति मनीषिणः ॥

परंच वीर्यपतनार्थं सर्वपदार्थेषु स्त्रीसंसर्गएव प्राधान्येन गणितोऽस्ति । वीर्यनाशेन सर्वावयवाः शिथिलप्राया भवंति । तस्मात्सर्वशारीरिकसुखाधारामूल्यवीर्यसंरक्षणमेव प्रशस्यतरम् । तथा गुरुरपि शिष्याय शारीरिकस्वास्थ्येन सह चित्तस्थैर्यार्थं प्रातः सायमीश्वरः सम्यग्ध्यातव्य इति बोधयेत् । तदीश्वरमनन्यभावनया भावयितुमुपायभूताः यमानियमादयः पतंजलिनोक्ताः सम्यगनुष्ठेया इति यथा–

" योगश्चित्तवृत्तिनिरोधः । अभ्यासवैराग्याभ्यां तन्निरोधः "
यमनियमासनप्राणायामप्रत्याहारधारणाध्यान समाधयोऽष्टावंगानि । अहिंसासत्यमस्तेय-

**ब्रह्मचर्य्यापरिग्रहायमाः । शौचसंतोषतपः-स्वाध्यायेश्वरप्रणिधानानिनियमाः ॥**

दुःखितप्राणिषु यः करुणां विदधाति सकरुणाबलं प्राप्नोति । पुण्यात्मपुरुषेषु योमुदितां भावयति समुदिताबलमाप्नोति । " बलेषु हस्तिबलादीनि " इति नागकृकलकूर्मादिप्राणायामबलेन हस्ति-सर्पवायुबलादीन्याधत्ते यथा दशप्राणानां व्याकृतिरपि शास्त्रे तूल्ले-खितास्ति " हृदिप्राणे गुदेऽपानः समानो नाभिदेशगः । उदानः कंठदेशस्थो व्यानः सर्वशरीरगः । उद्गारो नाग आख्यातः कूर्म-स्तून्मिलने स्मृतः । कृकरस्तु क्षुतिज्ञेयो देवदत्तोविजृंभणे । नज-हाति मृतंचापि सर्वव्यापी धनंजयः ॥ " एवं गुण विशेषान् प्रदर्श्य स्थानविशेषप्रगतिमप्याह ॥

**नाभिकंठभ्रूमध्यांतं प्राणः संचरते क्रमात् । तमोरजः सत्वोद्रेकान्निस्त्रैगुण्ये तदूर्ध्वभाक् ॥**

इति यथा मारुतिर्नागप्राणायामबलेनोदकादपि शरीरं तोलने लघुतरं कृत्वा समुद्रमध्यस्थां लंकां गतः । परं लांगूल-सामर्थ्येन समुद्रमुड्डीय लंकां प्रापेति यः पौराणिकवादः स त्वयथार्थ वादश्चेति मंतव्यम् । तथा भीमसेनकीचकप्रभृतयो घोरकलहसमये नागप्राणायामबलेन स्वशरीरं कंदुकवत्प्रफुल्लितं कृत्वा मुष्टिप्रहारादि परपीडने कृतदुर्लक्षा भवंतिस्म । तथैव समयानुसारं शरीरं गुरुत्वं

सम्पनीयातिजडगदायुधादिभिर्योद्धारो बभूवुः । तदेव सामान्यजन-बोधार्थं रुद्रावतारोऽर्थात् भयंकरसामर्थ्याविर्भाव इति पुराणेषूपदिष्टोऽस्ति । अत्र नागक्रिया द्योतत इत्यतोऽस्य नागप्राणायाम इति वदामः !

पश्य तावल्लोकेऽपि नागइत्यस्यार्थः सर्पोऽथवागज इति । सर्पो यदा बिले वर्तते तदा कृशशरीरोऽल्पाकृतिर्दृश्यते । तदेव बहिरागत्य क्रोधवशोभूत्वा वायुभक्षणेन यदि स्वशरीरं प्रफुल्लयेत्तदा महदाकृतिर्दृश्यते । नत्वेतावदेव यदि हस्तादावावृतः स्यात हस्तमेवोच्छिनत्ति । वायुलब्धमेतादृशं तस्य सामर्थ्यं दृष्ट्वा को नाम चकितचित्तो न भवेत् तथा कुंजरा अपि शुंडानां संकोचविकासादिना स्वस्वकार्यं साधयंति । एवं पुरुषोऽपि प्राणायामबलेन बह्वीः शक्तीस्तत्क्षणे निर्माय स्वेच्छयैहिकसुखमनुभूय परस्मिन्नपि सुखं भजति । एतदर्थमसौ ब्रह्मचारी स्वीयाः शारीरिकीर्मानसिकीरात्मकीः शक्तीरनुदिनं वर्धमानोऽस्मिन् ब्रह्मचर्याश्रमे योगांगादीन् साधयित्वा संन्यासे समाधिमाधिगच्छेत् ।

परं प्रथमाश्रमएव सकलविद्यानां संपादनीयत्वादेकस्यामेव विद्यायां कालक्षेपणस्य निंदितत्वात् शास्त्रीयज्ञानव्यतिरेकेण योगस्याप्यसुलभत्वात् । केवलं सन्यास एव प्राणायाममारभ्य तत्परिपूर्तिकरणस्य दुष्करत्वात् । प्रथमाश्रमएव सामान्यतोऽनुष्ठायांतिमाश्रमे समाधिविशिष्टो भवेत् । विषयोऽयं विशेषतोऽतिमाश्रमे वर्ण्यते ।

गुणत्रयेन चित्तस्य परिणामित्वात् क्षणंक्षणं गुणपरिवर्तनस्य परिदृष्टत्वात् गुणोत्पन्नक्रोधक्लेशादीनामविद्यामूलत्वात् अविद्यानिवृत्तौ क्लेशादयोऽपि निवर्तंत इति निष्कर्ष्यते । तस्मादविद्यानिवृत्यर्थं विद्यां विना न पृथक् प्रयत्नः परिदृश्यते । अतो विद्यैव सर्वैर्विजिज्ञास्येति सिद्धम् ।

ब्रह्मचर्यावस्थायां चित्तवृत्तीनां निरोधस्य प्राधान्यात् विद्याबुद्धिशांत्यादय स्तन्निरोधस्याधीनत्वात् तदेकाग्रेणैव च सर्वविद्याश्रेयोगुणानां संपादनसंभवात् ब्रह्मचारिणाऽवश्यं चित्तवृत्तिर्निरोध्यव्येति । तथा चित्तमपि सत्वरजस्तमोगुणात्मकमतस्तस्यावस्था अपि बहुविधा उपपद्यंते । तद्यथा सत्वगुणावस्था धर्मज्ञानवैराग्यैश्वर्यप्रसादप्रीत्यादयः। राजसः परितापशोकेर्ष्याद्वेषादयः । तामसा अज्ञानमयतार्थताऽगौरवदैन्यादयः ।

तथा चित्तमपि संस्कारानुसारं बुद्धिमाश्रित्य सात्विकादिगुणान् प्रणिधत्ते । चित्तं परिणतं सत् स्वस्वरूपप्रतिष्ठायां द्योतमानं सात्विकचित्तं राजसचित्तं तामसाचित्तमित्यभिधीयते । अस्मिन् सात्विकचित्तमेव श्रेयः प्रदमिति मत्वा बालैः सत्ववृद्ध्यर्थमेव यतितव्यम् । तदेतद्विद्याबुद्धिवर्धनसाधनभूता पुस्तकावलिः पठनपाठनपद्धतिश्च मयान्यस्मिन् पुस्तके विशदीकृतास्ति अतो नाहमत्रविस्तरभयाल्लिखामि ॥

केचन यावदायुषमधीतं चेदपि शास्त्रैकस्य परिपूर्तिः कदापि न भवतीति वैलक्षण्यमाविष्कुर्वंति तथा आचरंतीति दृश्यते । परं तेषामयमाचारविचारा अनादरणीयाः । यतः शास्त्राणामनंतत्वादेके-नैव कार्यनिर्वाहस्यासंभवात् शास्त्राणि साधनसत्त्वात् साध्यसिद्धेरभाव एवायुषः पर्यवसानाच्छास्त्रैकाध्ययनस्य पुरुषार्थोपयोगित्वाभावात् कैरपि महर्षिभिर्यावज्जीवनं शास्त्रैकाध्ययनस्याकथित्वात् शास्त्रैकाध्ययने जीवनव्ययवादो हेय इति मत्वा सर्वत्र समस्तोत्तमस्थिति प्रापणस्य विद्यामूलत्वात् विद्याया ब्रह्मचर्याधीनत्वात् सर्वैर्ब्रह्मचर्यपूर्वकं विद्या संग्रहणीया । अर्थात् बाल्ये व्यर्थमेव कालमनतिक्रम्य जितेंद्रियत्वेन विद्या संपादनीयेति संक्षेपतो ब्रह्मचर्याश्रमवर्णनम् ॥



# द्वितीयाश्रमो विमृश्यते ।



पूर्वं पितृयज्ञप्रकरणे आचार्यऋणं पितृऋणं देवऋणं चेति ऋणत्रयं प्रदर्शितम् । तत्रैकस्य ऋणस्यापनोदनार्थमेव द्वितीयाश्रमोऽयं ग्राह्य इति संकीर्त्यते । यथा मत्पिता मामुत्पाद्य सन्मार्गशोधयितारं कृतवान् । तद्वन्मयापि जीवमेकं कर्मबंधन-च्छेदनपूर्वकं स्वस्थानोन्मुखगामिनं कर्तुं जन्यजनकताविषयोप्य-नुभावितव्यश्चेति बुद्ध्यावश्यमेवाश्रमोऽयं गृहीतव्य इति । अन्यथा संसारस्याननुभवेनानवस्थितबुध्या सुखदुःखयोस्तारतम्यानभिज्ञो वासनाविशिष्टःसन् मोक्षं शीघ्रमनपेक्ष्य पुनःपुनः संसारे संसरेदतस्त-द्गतसारासारानुभवार्थमवश्यं गृहस्थो भवितव्यः । नन्वेवमुक्ते सति " कामानामुपभोगेन कामो नैव शाम्यति " इति वाक्येन न कदापि भोगशांतिर्भवतीति स्मर्यते । तथा लोके प्रत्यक्षानुभवोऽपि दृश्यते । यथा जराजर्जरितकलेवरो धवलकेशो जातपौत्रोऽशीति-वर्षवयस्कोऽपि पत्न्यादिविषयान् भोक्तुं स्वकीयप्रबलेच्छां प्रकटयति । एवं सति त्वदुक्तं सर्वथाऽसमंजसमिति चेन्मैवं वद । यतस्तदेतत्सर्वम-नधिगतस्वस्थितित्वाद्भवति । यथा किमर्थमहं कृतगार्हस्थः किंवास्य मुख्यप्रयोजनं किमर्थमत्राहं प्रविष्टोऽस्मि । मया किं कर्तव्यम-स्मिन्नाश्रमे किमेतस्य पतिपत्निभावस्य प्रयोजनं । का वाऽस्यावधि-

रिति सर्वं यदि परिग्रहात् पूर्वमेवाभिज्ञातं चेत्तर्हि त्वदुक्तप्राग्दोषः कदापि तस्मिन्न लिप्येत ॥ तदज्ञभावादेवाश्रमस्यास्याश्रुततत्वार्थो यथाभिलाषं चेष्टते । परमस्मिन् न तस्यैव दोषः किंतु यथा गोपालेन पलायमानपशुग्रीवे काष्ठं बध्यते । तद्वदाश्रमग्रहणप्रोत्साहिभिर्बांधवादिभिरप्ययं नियंत्रितो भवति तथा " यथाऽसौ गृहपत्नी " इत्यथर्ववेदवाक्यानुरूपं यथाऽसौ पतिस्तथा असौ गृहिणी अर्थात् यथा त्वं तथा तव स्त्री त्वत्समाना इति कुलशीलविद्यादीन् गृहस्थाश्रममर्यादां च सम्यगुपदिश्य प्रौढावस्थायामेव विवाहः कार्यः । अन्यथाऽबोधितमूलप्रबोधतुषाररश्मिर्यदि स्वैरं चरति तर्हि तत्र तस्य को वा दोषः ।

यथार्थबोध्यबोधकपरंपराविच्छित्तिरेवाश्रमस्यास्यैतादृशविपरीतदशाया मूलेति विज्ञायते ।

## ऋणानि त्रीण्यापाकृत्य मनो मोक्षे निवेशयेत्॥

इति सृष्टिनियमज्ञपुरुषाणां "प्रजयापितृभ्यः" इत्युपदेशसत्वात् सृष्टिकर्तुर्नियमोल्लंघनेऽस्वातंत्र्याच्च जगदुत्पत्तिसमये विधिनिर्दिष्टां लोकसंबंधिनीं व्यवहारमर्यादामनुवर्तमानोऽयं नूतनयौवने सदसद्विवेकज्ञानेन संयतेंद्रियो गृहस्थाश्रमे कर्तव्यकर्मणामाचरणे प्रोत्साहयुक्तो दक्षश्च भूत्वा तत्रत्यसुखदुःखतारतम्यं विवृण्वन् ऐहिकसुखमनुभवेदिति ॥

तत्र कन्यावरयोः परीक्षा कार्येति प्राक्तनाः सुस्पष्टमवादिषुः तद्यथा याज्ञवल्क्यः प्राह "यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रिय" इति । तथा परीक्षाक्रममप्याह नारदः ।

यस्याप्सु प्लवते बीजं ह्रादिमूत्रं च फेनिलम्।
पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षंडकः।
ह्रादिफेनिलमूत्रश्च गुरुशुक्रर्षभस्वरः। पुमा-
न्स्यादन्यथा पांडुर्दुश्चिकित्सो मुखे भगः।
शुभबीजवति क्षेत्रे पुत्राः संतानवर्धनाः॥

एवं

उन्मत्तः पतितः कुष्टी षंडश्चैव सगोत्रजः
चक्षुः श्रोत्रविहीनश्च तथापस्मारदूषितः॥
वरदोषाः स्मृता ह्येते॥

इति कात्यायनः॥

अथ कन्यालक्षणं मनुराह॥

नोद्वहेत्कपिलां कन्यां नाधिकांगीं न रोगि-
णीम्॥ नालोमिकां नातिलोमां न वाचाटां
न पिंगलाम्॥ अव्यंगांगीं सौम्यनाम्नीं हंस-
वारणगामिनीम्। तनुलोमकेशदशनां मृदं-
गीमुद्वहेत्स्त्रियम्॥ इति॥

अथ वरपरीक्षाभारः कैरंगीकर्तव्यः कथंकारमनयोः समु-
न्नतिः समभावनया संभाव्येत इति विचारपारिप्लुते विषयेऽस्मिन्
केचनैवं प्रतिपादयंति कन्यानामेवाधिकार इति अन्ये पित्रोरित्यपरे

बांधवानामिति । तथा नूतनशिक्षिताः कन्यावरयोरुभयोरप्यधिकार इति । एवं परीवादे नाद्यः । यतः कन्यास्त्वविज्ञातविद्याकुलशील-गुणादिरहस्याः स्वभावेन चक्षुर्मोहकरूपांधायमाना रूपादिबाह्यविषये-ष्वेव लुब्धाः केवलं गौरादिरूपमेवानुकुर्युरभिलषेयुश्च । तथा न द्वितीयः । यतो माता तु धनादिक्षुद्रपदार्थमेवापेक्षयति ! यथा सुवर्णरत्नाद्याभरणैः पुत्र्याः सर्वांगसुंदरत्वं यादृच्छिकभोजनं सूक्ष्मव-स्त्रादिपरिधानमेव च सर्वत्र लक्षीकरोति । यद्यपि पिता वरमृग्यं सर्वमप्यभिलषेत्तथैकेनैव कार्यनिर्वाहो न भवेत् । न तृतीयः यतो बांधवाः कुलशीलादिकमेवापेक्षेरन् । यथाह कश्चन कविरपि ।

**कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ॥**
**बांधवाः कुलमिच्छंति मिष्टान्नमितरे जनाः ॥**

अतो वरकन्याभिलषितसर्वविषयाणां परिपूर्तिकरणे सर्वे-षामावश्यकत्वात् परं विशेषत उभयोः कन्यावरयोः परस्परापेक्षायाः अतिप्रयोजनत्वात् तयोः संमतिपूर्वकं संशोध्य कन्यावरयोर्य-थाभिलाषं सर्वैः समाचरितव्यम् ॥

एवं कन्यावरयोरिच्छापूर्वकं विचारयेयुस्तर्हि तत्र सर्व-गुणसमष्टिभावात् स एष विवाहः सुखदायको भूत्वा तेन तयोर्दांप-त्यरसपीयूषपानेन भूलोकोऽपि द्युलोकायते । तस्मात्सर्वथा सर्वेषाम-धिकार एव श्रेयानस्मिन् कार्य इत्यपेक्ष्यते ।

सर्वैर्मानवैः कन्यायाः विक्रयः कदापि न कर्तव्यः । यत एतादृशविवाहः प्रपंचविघ्नोत्पादको भवति । यथा गुर्जरादि

देशेषु सहस्त्रावधिरूप्यकैः कन्या विक्रीयते । यदि तत्र यः कश्चित् दरिद्रपुरुषोऽस्ति सोऽयमामरणमविवाहेन अनाश्रमी स्थित्वा प्रबलप्रेरककामविकारेण संपीडयन् मरणांतं दुःखमेवानुभवन् म्रियते अतः कन्यायाः क्रयविक्रयविषयो शास्त्रेऽपि निषिद्धोऽस्ति ।

**आसुरो द्रविणादानात्** ॥ इति मनुः ।

**प्रदानमपि कन्यायाः पशुवत्कोऽनुमन्यते ।**
**विक्रयं चाप्यपत्यस्य कः कुर्यात् पुरुषो भुवि॥**
**( आदिपर्वे )**

एवं महाभारतादिग्रंथेषु कन्यायाः क्रयविक्रयरूपव्यवहारस्त्वासुरधर्म इति निंदितत्वात् सर्वथा हेयोऽयं पक्ष इति वदामः । तथा वरपक्षपुरुषैर्वरदक्षिणा [ हुंडी इति भाषायाम् ] ग्रहणमपि निंद्यमिति ज्ञायते । यतः पश्य तावत्सांप्रतं वंगदेशे संघटितदशां तत्र काश्चन बालयुवत्यः स्वपितुर्वरप्रदानवरदाक्षिणाद्रव्याभावस्थितिं समवलोक्य कथं वा पिता अस्माभिः ऋणग्रहणरूपदुःखसागरे निमज्जनीयः अथवा कथमविवाहेनामरणं दुःखं सोढ्वा स्थेयामिति बुध्या स्वदेहमाग्निसात्कृतवत्य इति श्रूयते । हाधिक् कीदृक् दौर्भाग्यमेतत् भारतीयानाम् । परं कीदृशोयमानंदवृत्तांतः । धन्याः खलु त एव वंगदेशीयास्तरुणाः ये उपरिनिर्दिष्टवार्ताश्रवणमात्रेण सर्वे मिलित्वा शपथमावहन्निति " इतो वयमीशसाक्ष्यनुसारं वरदक्षिणां न गृह्णीमः" इत्येवमादिनियमानंतःकरणपूर्वकं विधाय लोकोत्तरकीर्तिं

संपादितवंतः को नाम नानुकुर्यादीदृशसंसारसुखदायकोदाहरणम् । तस्मात् क्रयविक्रयवरदक्षिणाग्रहणव्यवहारः कन्यावरपक्षाभ्यां न कदापि कार्य इति ।

विवाहस्तूभयोः प्रौढावस्थायामेव भवितव्य इत्यपेक्ष्यते । यतो बाल्ये पूर्णेंद्रियाद्यभावात् तदुत्पन्नसंततेः पीडासंभवाच्छरीरबुद्ध्यादेः शिथिलायमानात् पुत्राणां तेजसोहानिकरत्वाच्च बालविवाहो निंदितोऽस्ति तथा आयुर्वेदोपि प्रौढविवाहमेव प्रतिपादयति ।

ऊनषोडशवर्षायामप्राप्तः पंचविंशतिः ।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ।
जातो वा न चिरं जीवेज्जीवेद्वा दुर्बलेंद्रियः ।
तस्मादत्यंतबालायां गर्भाधानं न कारयेत् ॥

इति सुश्रुतमुनिवाक्येन प्रौढावस्थायामेव विवाहो विहित इति । तथा तेनैव मुनिना तस्य कारणमपि कथितं सुश्रुते ।

पंचविंशे ततो वर्षे पुमान् नारी तु षोडशे ।
समत्वागतवीर्यौ तौ जानीयात् कुशलो भिषक् ॥

अन्यथा बाल्यावस्थायां गर्भाधानं क्रियतेचेदुत्पन्नसंततिस्तु-रोगी अल्पवयस्कोऽविचारादिदुर्गुणावृतो भवेदतः पूर्णवयस्येव गर्भाधानं कर्तव्यमिति सिद्धम् ॥

एवं संक्षेपतो वर्णितोऽस्त्यत्र । तस्मादायुर्वेदे विशेषतो गार्हस्थेनायं विषयोऽवलोकनीय इति ।

परं तदेतद्विवाहरूपीरेतसः संबंधः सामीप्येन न भवितव्यः। यतो रक्तसामीप्यात्तदुत्पन्नपिंडा निर्वीर्या निस्तेजस्का भविष्यंति। तस्माद्दूरतः संबंध एव विहितोऽस्ति । एवं प्रौढविवाहमनुकुर्वंतो देशक्षेमप्रतिकूलबालविवाहं निर्मूलयंतो वैषयिकसंसारसुखं यथाभिलाषमनुभवेयुरित्याशास्महे ।

तथान्यदस्मिन् विवादास्पदं निरूपणीयमस्ति तत्तु पुरुषास्तावदगणितस्त्रीगणग्रहणार्हाः । यथा प्रथमगृहिण्या अस्तित्वेऽपि द्वितीयायास्तृतीयायाः पाणिग्रहणे न कोऽपि दोष इति । परं स्त्रीणां बाल्यावस्थायामथवा यौवनेऽपि च भर्तरि मृते सति पुनर्विवाहं कर्तुमधिकारो नास्ति किंतु ताभिः केवलं मृतपतिध्यानेनैव कालक्षेपणं कार्यमिति । अर्थाद्विधवाविवाहोऽप्रशस्त इति विवादयंति ।

परं तत्कथनं शास्त्रविरुद्धं लोकाचारविरुद्धं पक्षपातापातितं च यतः सर्वत्रेश्वरसृष्टौ सर्वेषां समानाधिकारत्वात्सर्वं समभावनया भाव्यमिति । यथा शास्त्रेऽपि ॥

ऊदीर्ष्व नार्यभिजीवलोकं गतासुमेतमुपशेष एहि । हस्ताग्राभस्यादिधिषोस्तवेदं पत्युर्जनित्वमभिसंबभूव । ऋग्वेदे प० १

साचेदक्षतयोनिः स्याद्गतप्रत्यागतापि वा ।
पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ।
मनुस्मृतौ ॥

नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ॥
पंचस्वापत्सु नारीणां पतिरन्यो विधीयते ॥
पराशरस्मृतौ ।

तामनेन विधानेन निजो विंदेत देवरः ॥
मनुस्मृतौ ॥

इति वेदमनुपराशराद्युक्तिभिर्निर्दिष्टं शास्त्रप्रतिषेधविरहितं विषयमिमं तथा प्रकृतिप्रपंचप्रगतिं प्रतिरोद्धुं कथं कस्य वा बुद्धिः कल्प्येत । एवं शास्त्रानिषिद्धविषयस्यास्याद्यत्वे त्त्रावश्यकीं तत्प्रवृत्तिमजानंतः कथं निर्भयं निःसंकोचं विषयमिमं गर्हयंति । विरुद्धाभिप्रायं प्रकटयंति चेति न जानेऽहम् ।

यद्यपि नियोगपुनर्विवाहयोर्भेदोऽस्तीति प्रतिपाद्यते । तथापि न प्रमाणयत्येतत् यस्मादुभयकार्यस्य प्रयोजनैकत्वात् तद्गतभेदबुद्धिर्न सर्वसंमतेति निश्चीयते ।

पश्य तावदद्यत्वे पंचविंशतिलक्षकन्यका एकादशवर्षेभ्य ऊनवयस्का वैधव्यं वहंतो भारते संतीति मद्रदेशीयः कश्चिन्न्यायाधीशः परामृश्य एकादशवर्षवयस्कानां स्त्रीत्वं नास्तीति तासां वैधव्यं निवारयति ।

परं ये पुनर्विवाह एवास्माकं न संमत इति विवादयंति तेषां निजोऽयं वाद इति निपुणमातिष्ठमानानां प्राचीनाचारसर्वस्वं विलोपयितुकामानां देशक्षोभकरप्रवीणानामयं स्वार्थवादो लोकानंद-

करो नास्तीति विचिंत्य सुधीभिः पुनर्विवाहः शास्त्रेऽनिषिद्ध इति मत्वा सर्वदा सर्वैरनुष्ठेय इति सूच्यते ।

विवाहस्तुः प्राचीनाचार्यैर्ब्राह्मदैवार्षप्राजापत्यगांधर्व पैशाचा इत्यष्टधा गणिताःसंति । प्राज्ञपुरुषेण ब्राह्मदैवार्षप्राजापत्य-गांधर्वेषूत्तमेष्वेकेन विधिना गुरुजनसमक्षं पाणिग्रहणं कार्यमिति यतो नियतकालावधावेवायं विवाहः खंडितो न भवेदिति वि-विच्य धर्मनियमेन बंधितोऽस्ति । अन्यथा संसारविपद्भिः खंडितो भवेत् यथा आंग्लदेशे विवाहस्य धर्मबंधनाभावाद्व्यापाररूपत्वान्मनो-ऽभिलषितत्वादद्यान्यं श्वोऽन्यं वरयंतः स्वैरं चरंतः खंडितप्रेम-भावा भर्त्रा यत्किंचित्पीडिता अथवा अपीडिताप्युपायबाहुल्येन पूर्वपतिं धिक्कृत्य निहत्य वा स्वैरिणी भूत्वाप्राप्नोत्यन्यपतिं पतिरपि सेयमन्यं न वरयेदिति तस्या मनःपूर्वकर्मार्जवं कृत्वा श्रमितो लज्जितश्च दुःखमसहमानोऽन्यामाश्रयति । एवं परस्परदुःखाकुलौः दुरवस्थां-गतौ निजसंसारसारं कदापि नानुभवतः। तस्मादीदृशपशुभावं परित्यज्य आजन्मस्थायिनीयं भार्या मत्समीप इति तथा पतिर्जन्मर-णांतप्रेरक इति परस्परभावनां कुर्वंतावाश्रमवाहिन्यौ भवेतामिति ।

एवं कृतदारपरिगृहो ग्रामे वसन् पुण्यं विद्याप्रचारं संतानो-त्पत्तिं च कुर्वन् यथायोग्यधार्मिकनैतिकव्यावहारिकप्रपंचनियमै र्नियतो देशहितार्थं परोपकारादिकर्माण्याचरन्नैहिकसुखमनुभवेत् । तत्र मुख्यतस्त्वैक्यतत्त्वं परस्परप्रीतियुक्तसंवादः, उद्योगशीलता, मनसः सुसंस्कृतता, सर्वत्र समदृष्टिः, सत्यप्रियता, विद्याभिरुचिः,

स्वपत्न्यनुरागः, इत्यादिगुणाः गृहस्थेन यदि संध्रीयंते चेत् सोऽयं समस्तैहिकसुखभोक्ता भवेदिति निश्चयः । अत्र निर्दिष्टैकगुणस्य माहात्म्यं यथाह मनुः ।

संतुष्टो भार्यया भर्ता भत्रा भार्या तथैवच ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥

तथैकमत्यामित्रत्वादिविषये भगवान् वेदः प्राह ॥

मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे ।
यजुर्वेदे अ. ३६

संगच्छध्वं संवदध्वं संवो मनांसि जानताम् ॥
ऋग्वेदे ४. ८

तथा पत्नीधर्ममप्याह मनुः ।

सदा प्रहृष्टया भाव्यं गृहकार्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥
अध्याय ६

सदा संतोषः कार्येषु दक्षता उपस्करणादिना गृहशुद्धिर्यथार्जनानुसारं धान्यद्रव्यादीनां व्ययः, पुत्रीपुत्रदासीजनादिषु दाक्षिण्यं, दया च, आप्तेष्टबंधुष्वनुरागः, पतिमतानुरूपं वर्तनमभिलषितवेषानुकूल्यं च सहधर्मशीलता महिलाजनविहितधर्मकर्माद्युपदेशश्चेत्येवमादिगुणयुक्ता भवेत्पत्नीति ॥ एवं कविकुलगुरुकालिदासोऽपि बोधयति ॥

सुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने । भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः । भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी । यांत्येवं गृहणीपदं युवतयो वामाः कुलस्याधयः ॥

तथा कर्नाटकभाषायां जैमिनिकविना पतिगृहगंत्रीं स्वभगिनीं प्रति सिंहलराजोक्तिरिति बोधितासुनीति रप्यत्र वर्णनीयास्ति ।

तांगि निजेश्वरंगे बगेदांतिरु नींबेसकैवुदत्तेमावंगळमातुमं मरेदु मीरादिरार्यहितोक्तिगळगेचित्तंगुडु बंधुवर्गदुपचारमनांतिरुमेशभक्तियिंपिंगादिरोळजसंबडेदु बाळ्दमगीवुदतिप्रमोदमम् ।

पतिपत्निभ्यां विवेकेन मिथो व्यवहर्तव्यमित्याह मनुः ।

तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ ।
यथा नाभिचरेतां तौ वियुक्तावितरेतरौ ॥
अ० ९

अन्यथा स्वद्रव्याद्युत्पत्तिमविविच्य यथेच्छव्ययेन ऋणग्राहकौ भवेतां तदृणं पुत्रपौत्रान् आत्मानमपि च बाधयेत् तथा

चाणिक्यमुनिः " ऋणकर्तापिता शत्रु " रित्याह तस्मात्सर्वथा नर्थप्रदऋणं नैव कार्यं कदापि ।

परं गृहे भर्त्रा दासभावनया कदापि पत्नी नैव गणनीया किंत्वादरणीया यतः स्त्रियैव संतानोत्पत्तिगृहशोभादिसंभवादेवमेव मनुरप्याह ।

**पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।**
**पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥**
**अ० ३**

स्त्रीणां पातिव्रत्यमेव भूषणम् । पुरुषाणामपि स्वयोषितिरतिरेव सुखप्रदा । अत उभाभ्यां स्वैरं नाचरेत् । अन्यथा परस्परप्रेमबंधनाभावे निरंतरदुःखमेवानुभवेताम् । तस्माद्दंपती गृहे मिथः प्रेम्णाऽऽतिथ्यगुरुजनसेवां साधुसङ्गापेश्वरभजनादीन्याचरंतावानंदोत्सवैः कालं नयेतामिति ।

विपन्मग्नस्वामिनो दुःखमेव मद्दुःखमिति ज्ञात्वा तदुपशमने भार्या कृतप्रयत्ना भवेत् अत एव **गृहिणी गृहमित्याहुर्नगृहं गृहमुच्यते** अन्यथा दुःखितं स्वामिनं विलोक्य दुरापसारिणी कुलटा गर्हणीया भवेत् । तस्माद्भार्ययासह प्रेमपूर्वकमाचरणीयमिति ।

सर्वे गृहस्था जगति धनं खलु वयं लभामहे सुखेन सर्वत्र व्यवहराम इति विमुह्यंति । सुखप्राप्त्यर्थं दुःखनिवृत्त्यर्थंच यथाशक्ति चिंतयंति प्रयतंते च परं तस्य यथार्थसाधनान्यजानंतः केवलं यथा

कथंचित्संपादितवस्तुलाभेन परितुष्यंतो व्यवहरंतीदमेव सुखमिति। यतो रंजनलोलुपत्वात् चित्ताकर्षकद्रव्यैर्विमोहितमतयस्ते धनमपगमयंतोऽपि न जिह्रियति।

तथैव धान्यादिविनिमयेन विपुलं धनमस्माभिर्लब्धमिति मन्यंते भारतीयाः। परं तैः स्ववस्तुनः कियदपक्षयो जात इत्येतन्न चिंत्यते। तद्यथा स्वस्वदेशीयपदार्थमथवा कार्पासराशिं मुद्राशतेन परदेशीयवणिग्भिः क्रीत्वा ते तद्राशिं पुनः कुविंदहस्तेऽथवा यंत्रे नियंत्र्य वस्त्राकारेण विरचय्य तत्पूर्वोत्पत्तिस्थलाय प्रेषयंति। तदेव वस्तु पूर्वगृहीतस्थलात् सहस्ररूप्यकाण्याकर्षयति। हाधिक् वैचित्र्यमेतत् केवलं वसुंधराप्रसादमात्रेण लब्धं वस्तुजातं देशाद्देशांतरानयनेन सहस्रफलदायकमभवत्। अर्थादुत्पत्तिस्थानाय शतं परस्थानाय सहस्रं फलाय मानं जातम्। एवं वैपरीत्यं स्वद्रव्यापगमं च सुविचार्य तत्तद्देशीयास्स्वस्वदेशेष्वेव नानाविधानि वस्तुजातानि रचयितुं स्वस्वबुद्धिकौशल्विनिमयेनोत्तमोत्तमयंत्रान् विरचय्य कर्मकुशला यदि भवेयुस्तर्हि परदेशीयैर्यत् स्वकौशलेनापह्रीयमाणं धनं तत् स्वस्थल एवावशिष्य सुखदायकं भवेत्। न त्वेतावदेव किंतु देशे आलस्यदारिद्र्यादयो विलयं प्राप्य राष्ट्रोऽपि सुखीभवेत्। तथाच स्वस्वदेशकृतिसामर्थ्यात् तत्तद्वसुंधरालब्धधनधान्यनिचयानां स्वत्वं तत्तद्देशीयैः

कदापि नातिवर्तेत । अतः स्वदेश एवोद्यमरचना श्रेष्ठा तयैव संपदभिवृद्धिरन्यथा संपदोऽपेक्षा स्वप्नप्रायेति मत्वा सर्वे गृहस्थाश्रमिणः स्वदेश एव विद्याव्यापारकलाकौशल्याद्यभिवृद्ध्यर्थं सर्वदा कृतप्रयत्नाः संतस्तलब्धवैभवेन यथासुखं जीवेयुरित्याशासे ।



श्रीः ।

# अथ तृतीयाश्रमो विविच्यते ।



अनवरततपोनिष्ठत्वमेव वैखानसत्वमथवा वानप्रस्थ इत्ययमेव तृतीयाश्रम इत्युच्यते शिष्टैः । मानवः स्ववयसस्तृतीयावस्थायां भाविनीं स्ववृत्तिमाश्रित्य वनं समाश्रयेदिति वनवासस्मरणात् कृतगार्हस्थः सुतविन्यस्तपत्नीकोऽथवा तयानुगतस्तृतीयाश्रमंव्रजेदिति स्मर्यते । यथाह मनुः ।

एताश्चान्याश्च सेवेत दीक्षाविप्रो वने वसन् ।
विविधाश्चौपनिषदीरात्मसंसिद्धये श्रुतीः ॥
ऋषिभिर्ब्राह्मणैश्चैव गृहस्थैरेव सेविताः ॥
विद्यातपोविवृद्ध्यर्थं शरीरस्य च शुद्धये ।
आसां महर्षिचर्याणां त्यक्त्वान्यतमया तनुम् ।
वीतशोकभयो विप्रो ब्रह्मलोके महीयते ॥

मनु. अ. ६

अन्यत्र यथोक्तम् ।

प्रथमे वयसि नाधीतं द्वितीये नार्जितंधनम् ॥
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यसि ॥

तस्मादवश्यमेव तृतीयाश्रमे तपोऽनुष्ठेयमेवेति निश्चीयते ।

परमतिमहति विस्तीर्णे संसारेऽस्मिन्नेतावधि कतिदाराः पुत्राः पौत्राः पितृपितृव्यपितामहादयश्चातीतास्तान् सर्वान् क्षणमात्रं दारुणतया प्रकाशमानान् बंधूंश्चेह जगति विद्युत्पातवत् संगत्य तेषां संयोगवियोगाभ्यां सुखी दुःखीत्यवधार्य जनः सपदि स्वबंधुषु मृतेषु सस्वंतःकरणे भूयो भूयो भूरि संतापं वृथाऽनुभवंश्चिंतासंतानैरभिभूयते ।

यथाऽभ्रपटलैर्वातनीतैश्चांद्रमसबिंबमभिभूयते । तद्वत्सुखदुःखचक्रक्रकचसंभ्रमे भ्रमंतोऽसारे सर्वानर्थबीजे संसारेऽस्मिन्नत्यंतकटुपरिणतौ ज्ञातेऽपि ज्ञानोपदेशामृतैर्हृद्यात्मावबोधः संपादितोऽपि मोहशोकादिलहरीभिराब्रियंत एव पुनः पुनः । परं तेषां सर्वसुखोत्पादकवैराग्यं कदापि नाविर्भवति । अहो तदेतन्मायाया वैचित्र्यम् । यतो मायातिप्रबलविपरीतासंभवादिसंस्कारविकृति विशिष्टास्ति । अतो धीमता बलवत्तरसंस्कारदृढीभूतानां वृथान्यथाकारिणां मर्मभेदिनां माययोत्पन्नानां शोकमोहादीनांच निरोधार्थमवश्यमेव महौषधिः परिशोधनीया । परं मायानिवारकोपायस्त्वसंकल्प एवेति विश्वस्यते । अर्थात् विषयादीनां पुनः पुनः स्मरणाभाव एवेति । यतः शरीरं विपत्तीनां गेहं । अतस्तज्जातक्षणिकविषयसुखविशेषेसु मनोऽपरिष्वजन् शोकमोहरहितविषये चित्तं स्थिरीकृत्य विरसपरिणामेऽस्मिन् संसारे त्यागबुद्धिं विस्तारयन् हृदि वैराग्यं दृढयेत् ।

यथा संसारभोगसंतप्तपुरुषो यथातुरं ब्रह्मसुखमनुभावितुं मनो विदधति । तथान्यः संसारदुःखापरिचितः सन् वैराग्ये मनो न कुरुते ।

तस्माद्यथाक्रमं गृहस्थवानप्रस्थाद्याश्रमग्रहणमेव सुविहितमिति भाति । तथा संसारमार्गातिक्रमणे सुलभोऽपि भवतीति ज्ञेयम् । मनुनाप्युक्तंच ।

गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः ॥
अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेत् ॥

प्रथमं गृहस्थाश्रमे ये विषया अनुभूता यथार्थतया त एवास्मिन्नाश्रमे मिथ्यात्वेन परिभाव्यमाना वैराग्योत्पादनहेतवः संभूय विवेकेऽनुरागमुत्पादयंति । तद्विवेकसंमार्जिताज्ञानस्तोमव्यलीको विशुद्धो जीवस्त्वात्मीयं परमात्मभावमापत्सते । तस्मात्तदेतत्सर्वकार्य-सिद्ध्यर्थं सद्विद्यासद्धर्मोपदेशहेतोरैहिकामुष्मिकतत्वावबोधार्थमयमाश्रमोऽवश्यमेवांगीकरणीय इति ।

परं केचनाश्रमस्यास्यानंगीकारे न कोऽपि दोष इति भणंति । यतस्तन्मते वानप्रस्थाश्रमे साधनीयविषयाणामंतिमाश्रम एव साधयितुमर्हत्वात् । " यदहरेवविरजेत्तदहरेव प्रव्रजेदिति " हारीतमुनिना युगपत्सन्यासग्रहणदर्शनाच्चातोऽस्याश्रमस्य स्वीकारो विकल्प एवेति प्रतिपादयंतीति संक्षेपतो वानप्रस्थाश्रमविचारः ।

# अथांतिमाश्रमविचारः ।



तापत्रयपरितप्ता बंधत्रयबंधिताः प्रकृतिभावनासरक्तत-स्वांताः प्रकृतिलयमापन्ना जंतवो ज्ञानक्रियासामर्थ्यातिशयमंतरेणा-पहृतरजस्तमोमलविशुद्धसत्वापादानं च प्रत्यभावमहार्णवात्तर्तुं कदापि न प्रभवेयुरतो विशुद्धसत्वसंपादनार्थमथवा चित्तशुद्ध्यर्थं तापत्रयादिबंधनविमोचकोऽयमाश्रमः सर्वमानवप्राणिभिर्यथाकालं ग्राह्य इति । तथा चेतनाचेतनव्यूढं विश्वं तत्राचेतनायाः प्रधान-त्वात् जीवोऽयं मृगतृष्णारूपसंसारमध्यपतनेन वंचितोऽस्ति । तथा क्लेशकर्मविपाकादिमायाविकारैः परामृष्टत्वादयं जीवोऽविद्यास्मित रागद्वेषाभिनिवेशाकरदेहेंद्रियविषयवासनां प्रविशति ॥

क्लेशादीनां धर्माधर्मरूपकर्मणां चान्युगुण्येन वासनाः प्रादुर्भूय तद्वासनाविशिष्टसांसारिकपुरुषमर्मक्लेशादयो बहुविधदुःख प्रहारेण पीडयंतः पुनः पुनः संसारे संयोजयंति । अतः संसारका-रणीभूतवासनोच्छेद, एव विहितः । यतोऽनेन वासनोच्छेदनेन विगलिताखिलवासनाजीव एव अनेकविधविषयोपरमात् विज्ञानसं-ततौ समुल्लसति । एवं विज्ञानपरंपरायां पतितो विज्ञानस्वरूपी प्रवृत्तिसंस्कारविज्ञानसंतानांतः पाती संसारी मुक्तो भविष्यति । तस्माद्वासनानिमित्तविषयादीनां प्रतिरोधमंतरेणेंद्रियाणां विरामो वृत्तीनामभावश्च भवितुमसाध्य इति मत्वा तद्वशीकरणे कृतप्रयत्नो भवेदिति ।

अन्यथात्विंद्रियगुणेषु लोभादिष्वासक्त्या दुरहंकाराचित्तो भूत्वा प्रचुरेच्छाप्राबल्यात् दीनस्तपोधनहीनोमनोमालिनः सन् त्रिपयो-द्भूतसंतापदुःखमनारतं सहन् न जानातीयमाशापिशाची हठात्सर्वग्रासं यथास्यात्तथा चिरान्मां गालिष्यतीति । तथा रागद्वेषमानमात्सर्येर्ष्यासू-याद्यो विषाग्निवत्सर्वशरीरं व्यवसर्प्य मर्माणि ज्वलयंति तथातिवेदनां विस्तारयंति । अतो देहाधिष्ठितमोहेन विवेकमाच्छाद्य तेन बुद्धि-भ्रमविषयव्यामोहाक्रांताचित्तः सन् स्वविषयस्मृत्यभावात् स्वविज्ञान-विनाशाच्च संसारकारागारे पतित्वा विषं पिबतोऽमरत्वमिव दुर्मार्ग-प्रवृत्तः कदाचिदपि मुक्तिफलभाग्न भवति । तस्मादिंद्रियेभ्यस्तद्गत-विषयेभ्यश्चावकाशमदत्वा सर्वेंद्रियनिग्रहपूर्वकं लोभादिजन्यरजः प्रक्षाल्य " **संतोषादनुत्तमसुखलाभः** " इति योगसूत्रानुसारमा-नंदविशिष्टः सन् सुखेन जीवेदिति । तथा क्रोधापनयनेन हिंसा-पारुष्यमानमात्सर्यादयो विजिता भवंति । यतो हिंसादयः क्रोध-मूलाः । तथा संजातक्रोधो विवेकं परित्यज्य सन्मान्यगुरुवर्गं स्वकुलोद्भवजनानपि निर्मूलयितुं प्रयतते । अतस्तदपनोदनमेव श्रेयः तदर्थं यत्नः करणीयः तन्निवारणोपायस्तु विवेक एवेति विज्ञायते । यतो विवेकसाक्षात्कारं विना ज्ञानविघातकाज्ञानस्य निवृत्तिः कदापि न भवति । विवेकासक्तिमात्रेण कामक्रोधादयो दूरमतिक्रामंति । तथा वैषयिके सुखे सक्तं न करोति । अतो नरमात्राभिमानिना सुलभोपा-यभूतविवेक एवाश्रयणीय इति । परमयं विवेकस्तु इंद्रियनिग्रहा-धीन इति । तथाहि शास्त्रेप्युक्तमस्तींद्रियनिग्रहस्य श्रेष्ठत्वम् ! यथा—

**मनसश्चेंद्रियाणां चैकाग्रं परमं तपः ।**
**तज्जायः सर्वधर्मेभ्यः स धर्मः पर उच्यते ॥**

एवमिंद्रियनिग्रहादिसाधनद्वारा साध्यैकसिध्यर्थं प्रथमाश्रमादेवाथवा तृतीयाश्रमादेव चतुर्थाश्रमं गच्छेद्ब्रह्मविद्यापरायणः । तत्र "**मुंडः शिखी वा**" इति वैकल्पिकस्य गौतमेन दर्शितत्वात् "**सशिखान् केशान्निकृंत्य विसृज्य यज्ञोपवीतं**" इति काठकश्रुतिप्रवचनात्, "**गुणाः पूजास्थानं गुणिषु न च लिंगं न च वयः**" इति महाकविभवभूतिवाक्याच्च बाह्यविषयाडंबरो विषयपराङ्मुखस्य निराभारिणोऽनुचित एव । न तु केशादिबाह्याडंबर एव किंत्वस्य सांसारिकसर्वविषयास्त्याज्या एव । अतएवास्य परिव्राजकादिनामानि श्रूयंते । यथा "**एतमेव प्रव्राजिनो लोकमीप्संतः प्रव्रजंति**" इति शतपथब्राह्मणादिग्रंथेषु परिव्राजकादिशब्दाः प्रदर्शिताः संति । एवं परिपूर्वो व्रजतिस्त्यागे वर्तते । तथैषणात्रयं दूरीकृत्य संसारिकसर्वभारैर्निःसंगो भूत्वा लोकेभ्यो धर्ममुपदिशन् मोक्षपरायणो यो भवति । स एव परिव्राजको निराभारी चेत्यादिशब्दैराहूयते । एवमेव सर्वसंगनिःसंगत्वं भूतमात्रानभिद्रोहत्वं च शैवागमे प्रोक्तमस्ति । तद्यथा—

**नांदोलिकां समारोहेदश्वारोहणवर्जितः ।**
**पादचारी च संभूय चरेद्भूवलये सदा ॥**

तथा च ' अक्रोधोऽपरिग्रहः ' त्यागः परिग्रहाणां च जीर्णकाषायधारणम् । इत्येवं वशिष्ठयाज्ञवल्क्यादयः स्मरंति । एवं याचनाव्यपदेशेन यथेच्छद्रव्यसंग्रहकरणं संन्यासिनां महापातकमिति ज्ञायते । यत उपरिनिर्दिष्टमहर्षिवाक्यविरोधात् तथा द्रव्यसंग्रहस्य निरुपयोगादनर्थोत्पादकत्वाच्च यावता प्राणयात्रा भवेत्तावन्मात्रं भैक्ष्यमाचार्य शास्त्रार्थसंलापादिभिः कालं नयेत् । यतो भौतिकशरीरस्य भौतिकान्नप्रयोजकत्वात् जीवभोगस्यापूर्तिसमय एव शरीरपतने सति जविस्य पुनः शरीरधारणप्रसंगात् याथावद्देहसंरक्षणं कार्यमेवेति परंच " माठापत्यं च यतयः करिष्यंति धनाशया " इत्युक्तिमनुसृत्येदानींतनाः सन्यासिनः पृथिव्यां दीप्यमानमहामयूखमालोद्भासितप्रचंडमार्तंडमंडले प्रज्वलति सति घृतप्रज्वलितदीपोऽग्रमस्माकं " विरुद " इति मुधा घृतदीपं ज्वलयंतोऽमुंडितमनसा मुंडितमुंडा भिक्षामात्रप्रयोजका धनार्थगृहीतयतिव्रतास्त्रिदंडिव्यपदेशेनोदरपोषणं कुर्वंतो मोहावृतास्त्वाश्रमभ्रष्टाः कालं नयंतः स्वद्रव्यवैभवं लोकेभ्यः प्रदर्शयंता जनान् बलात्कारपूर्वकं द्रव्यापहरणेन पीडयंतः संचरंति देशेदेशे । परंच नैवैते चिंतयंति ब्रह्मानंदवैभवतुल्यो लौकिकवैभवः कदापि न भवतीति । यैरात्मसाक्षात्काररूपप्रतिष्ठा प्रस्थापिताऽस्ति तेभ्योऽज्ञजनार्पितप्रतिष्ठायाः का वा वार्ता ।

तथैतेषां जीवनवृत्तिर्मनुनाप्युक्तास्ति ।

एककालं चरेद्भिक्षां प्रसज्येन्नतु विस्तरे ॥
भैक्षे प्रसक्तोहि यतिर्विषयेष्वपि सज्जति ॥
न चोत्पातनिमित्ताभ्यां न नक्षत्रांगविद्यया-
नानुशासनवादाभ्यां भिक्षां लिप्सेत
कर्हिचित् ॥ इति

तथा आश्रमस्यास्य ग्रहणे कालनियमोऽपि नास्ति यतः "यदहरेव विरजेत्तदहरेव प्रव्रजेत्" इति स्मरणात् यदा सृष्टिपदार्थेषूत्पन्नविरागो भवति । तद्दिनादारभ्यायं सन्न्यासीति ज्ञातव्यम् । अतएव " यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेद्ग्रहाद्वा वनाद्वा " इति जाबालोक्तिः संगच्छते । एवमेव मनुरपि संन्यासग्रहणमाह ।

यो दत्वा सर्वभूतेभ्यः प्रव्रजत्यभयं ग्रहात् ॥ ॥
तस्य तेजोमया लोका भवंति ब्रह्मवादिनः

यद्यपि ब्रह्मचर्यादेव सन्यासग्रहणस्य प्रतिषेधोऽस्ति यतः " अपुत्रस्य गतिर्नास्ति "

अनपाकृत्य च ऋणं मोक्षमिच्छन् पतत्यधः ॥

इत्यादिवाक्यैः प्रजोत्पत्तिरूपऋणापकरणस्यावश्यकत्वं प्रदर्श्यते तथा तद्गृहस्थाश्रमस्य प्रौढिप्रदर्शनार्थमेव न तु वास्तवि-

कम् । यतो ये परिपक्वांतकरणा देहाद्यनपेक्षा विवेकादिसाधनसंपन्ना ऋणत्रयसंबंधलेशो नास्तीति निश्चितचित्तास्ते पुत्रैषणादित्यागबुद्ध्या युगपत्सन्यासग्रहणार्हाः संतीति ज्ञेयम् ॥

सत्वरजस्तमोगुणविशिष्ट आत्मा स्वयमीश्वरोऽपि सन् मायावशान्मानसादित्रिप्रकारककर्मणां विपाकाच्चक्रवदिह संसार आस्मानं भ्राम्यमाणो मिथ्यैव जगदाकारेण कल्प्यते । अर्थात् पुनः पुनः शरीरधारणं करोति । तस्मात्तन्निरोधार्थं सर्वारंभविवर्जितः केवलज्ञाननिष्ठापरः सन् चित्तवृत्तिनिरोधात्मकेन राजयोगाभ्यासेन तत्साधनरूपवैराग्येण च कर्मरूपी जीवः स्वप्रकाशपरमानंदस्वरूपात्मनः पशुपाशविमोक्षणाय कृतसंधानो भवेदिति । परं ज्ञानयोगेनैव साधयितुमसाध्यत्वान्महर्षिपतंजल्यादिप्रणीतयमनियमासनप्राणायामप्रत्याहारध्यानधारणसमाध्यष्टांगयोगमाचर्य पुरुषेण चित्तस्थैर्यं संपादनीयम् । तद्यथा प्रथमतः साधको निर्जनप्रदेशं गतः कामक्रोधादिवासनानास्पदस्थानवासः नातिनीचोच्छ्रितासनः सन् मुखं किंचिदुन्नम्योरसा विष्टभ्य दंतांतरे कृतश्वासोच्छ्वासश्चेंद्रियग्रामं विषयेभ्यः प्रत्याहृत्य सरलदेहेन समुपविष्टो यथानुकूलं प्राणायाममारभेत् तत्प्राणायामरीतिः श्लोकरूपेण महर्षिभिर्वर्णिताऽस्ति । तद्यथा—

प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ।<br>
बहिर्यद्रेचनं वायोरुदराद्रेचकः स्मृतः ॥<br>
निष्क्रम्य नासाविवरादशेषं प्राणं बहिः

शून्यमिवानलेन । निरुध्य संतिष्ठति रुद्ध-
वायुः सरेचको नाम महानिरोधः । बाह्या-
दापूरणं वायोरुदरे पूरको हि सः । बाह्ये
स्थितं घ्राणपुटेन वायुमाकृष्य तेनैव शनैः
समंतात् । नाडीश्च सर्वाः परिपूरयेद्यः
संपूरको नाम महानिरोधः संपूर्य कुंभव-
द्वायोर्धारणं कुंभको भवेत् । न रेचको नैव
च पूरकश्च नासापुटे संस्थितमेव वायुम् ।
सुनिश्चलं धारयते क्रमेण कुंभाख्यमेतत्प्रव-
दंति तज्ज्ञाः ॥

परमनेनोक्तप्रकारेण रेचकपूरककुंभकान् मात्रागणनपूर्वक-
मनुचरन् प्राणायाममभ्यसेत् । स एव प्राणायामो यथाभ्यासक्रमेण
वर्धमानो धारणाध्यानसमाधिसिद्धिं गच्छति । एवमेव शास्त्रे प्रति-
पादितमस्ति ।

प्राणायामद्विषट्केन प्रत्याहार उदाहृतः ।
प्रत्याहारद्विषट्केन धारणा परिकीर्तिता ।
भवेदीश्वरसंगत्यै ध्यानं द्वादशधारणम् ।
ध्यानद्वादशकेनैव समाधिरभिधीयते ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे।
प्राणापानगती रुध्वा प्राणायामपरायणाः॥

इति भगवद्वचनात्पूरकरेचककुंभकरीत्या प्राणायामं कुर्वद्भिरेव हृदये परमात्मा अन्विष्यते। अर्थात् स्थितप्रज्ञानां परिपक्वसमाधीनामेव तस्य साक्षात्काराधिकारत्वं ध्वनितं। प्रकृतिवशादनंतभावनया पर्यटंतं प्राणवायुमासमंतायमनीयवृत्तिरेव प्राणायाम इति सुस्पष्टीकृतत्वात् हृदि तदेत्प्राणवायुं चित्तागोचरतया धारयेदित्येवं धारणास्वरूपनिर्देशः कृतः॥

अथमात्रापरिमितिः।

संभ्रम्य च्छोटिकां दद्यात् कराग्रं जानुमंडले।
मात्राभिः पंचदशभिः प्राणायामोऽधमः स्मृतः
मध्यमो द्विगुणः श्रेष्ठस्त्रिगुणो धारणा तथा
त्रिभिस्त्रिभिः स्मृतैकैका ताभिर्योगस्तथैव च॥

एवमेव धारणाद्यनुक्रममप्याह।

धारणा पंचनाडीभिर्ध्यानं स्यात् षष्ठिनाडिकम्।
दिनद्वादशकेन स्यात्समाधिः प्राणसंयमात्॥

एवं मात्राणां परिमित्या धारणामवधार्य वशीकृतप्राणवायुर्जीवो हृदये दीपवज्ज्वाज्वल्यमानं स्थिरीभूतमखंडानंदैकरसभरितं परमपुरुषं साक्षात्कृत्य विनष्टसकलेष्टो देहं त्यजन् अमृतत्वाय कल्पते।

यत्समाधौ परं ज्योतिरनंतं स्वप्रकाशकम्॥
तस्मिन् दृष्टे क्रियाकांडं यातायातं निवर्तते॥

तस्मात्कर्मापनोदनार्थं त्यक्तनिषिद्धकाम्यकर्मा एकांतशीलोऽयाचितमिताशनापादितसत्वशुद्धिः सन् आत्मोपासनेन मुक्तिलक्षणां परमां सिद्धिं साधयन् मुक्तो भवेदिति ॥

अभ्यासकालोचिताहारनिद्रादिस्थितिमाह ।

**अभ्यासकाले प्रथमे शस्तं क्षीराज्यभोजनम् ॥**
**ततोऽभ्यासे दृढीभूते न तादृङ्नियमग्रहः ॥**

एवमतिकट्वाम्लरूक्षपदार्था अतिनिद्रालस्यादयः सर्वथा वर्ज्या इति । तथैव मिताहारप्रयोजनमप्याह मनुः ।

**अल्पान्नाभ्यवहारेण रहः स्थानासनेन च ॥**
**ह्रियमाणानि विषयैरिंद्रियाणि निवर्तयेत् ॥**

## अध्याय ९

एवमुपर्युल्लिखितनियमपरिपालनेन विशुद्धचित्तः सन् सर्वत्रात्मानं पश्यति । तद्ब्रह्मात्मैकत्वज्ञानादज्ञानं निर्मूलयित्वात्मप्रकाशमानंदं प्रकटयन् मुक्तिहेतुर्भवतीति निश्चयः ॥

परमस्यांतिमाश्रमस्य स्वीकारे केवलं ब्राह्मणानामेवाधिकारः । अन्येषां त्रैवर्णिकानां नास्त्यधिकारस्तथा स्त्रियोप्यनाधिकारिण्य इति । नत्वेतावदेव कलौ सर्वेषामपि सन्यासग्रहणनिषेधः पुराणे प्रदर्शितः ।

**अश्वालंभं गवालंभं सन्यासं पलपैतृकम् ॥**
**देवरेण सुतोत्पत्तिः कलौ पंच विवर्जयेत् ॥**

**आदित्यपुराणे**

एवं सति कथं त्वयैतत्सन्यासाश्रमः प्रतिपाद्यते । इति चेद्व्यर्थप्रलापोऽयमिति विजानीहि यत एतदेवसत्यमासीत्तर्हि ईदृशशास्त्रनिषिद्धाचारः कलियुग एव श्रीशंकराद्याचार्यैः कथमनुष्ठितः । तथा ब्राह्मणानामेवाधिकार आसीत्तर्हि क्षत्रियकुलदीपकैर्जगन्मान्यैः स्वामीविवेकानंदादिभिः कथं स्वीकृतः—

अतः शिष्टाचारप्रामाण्येन सर्वमेतत्त्याज्यमिति ज्ञात्वा सर्वैः सर्वस्मिन् काले यथाक्रममाश्रमचतुष्टयं स्वीकर्तव्यमेवेति । तथैव सर्वे चतुराश्रमग्रहणेऽधिकारिण इति प्रदर्शयितुं प्राचीनानां बहून्युदाहरणानि लभ्यंते ।: यथा 'विश्वामित्रः' क्षत्रियकुलोत्पन्नोऽपि सन्यासमंगीकृत्य ब्रह्मर्षिपदं लेभे ! तथा भगीरथदासीपुत्रविदुरप्रभृतयो मुनिपदं प्रापुः । एवमेव गार्गिमैत्रेयीसुलभादिस्त्रियोऽपि ब्रह्मचर्यसन्यासाद्यश्रमावलंबिन्यो बभूवुरिति एवमेव लिंगांगिधर्मे त्वद्यापि सर्वेषांस्त्रीपुरुषाणां समानाधिकारप्रचारः परिदृश्यते। परं महाभारतेऽपि गृहीतांतिमाश्रमा सुलभा यथाह जीवन्मुक्तजनकराजसभायाम् ।

**साहं तस्मिन् कुले जाता भर्तर्यसति मद्विधे ॥**
**विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥**

इत्यादिमहाभारतलब्धोदाहरणैः सर्वेषां स्त्रीपुरुषाणामाश्रमचतुष्टयांगीकारे न कोऽपि प्रतिबंधो दोषश्चेति विज्ञेयम् ।

एवमाश्रमधर्मविहितकर्मणोऽननुष्ठाने त्वाश्रमधर्मं त्यक्तवानयमिति चिरकालस्थायिनीमकीर्तिमप्रतिष्ठां च प्राप्य धर्मावबोधक-

धर्मस्यमूलकारणं वेदादिशास्त्रं तद्वेदोक्तकर्मत्यागेनेश्वराज्ञोल्लंघनरूप-महापापमनर्थपरंपरामैहिकामुष्मिकसुखाभावं चानुभवेत् । तथा लोका अपि पापिष्ठोऽयं स्वधर्मभ्रष्टोऽपंक्तिपावन इति निंदंतः कुत्सयंतश्च-कर्णकठोरानसहनीयान् धिग्जाल्म इति धिक् पूर्वकान् शब्दान् प्रवदंतो भर्त्सयंति । अतो दुःष्कीर्तेर्मरणं वरम् यतो मरणदुःखं क्षणिकं दुःष्कीर्तिदुःखं त्वाजन्मस्थायि तस्मात्तदेतद्दुःखं मरणादति रिच्यते । न त्वेतावतैव परिसमाप्तिः किंतु मृतोऽपि ज्ञानाभावात्पुन-र्जननमरणह्रदे निमज्जति । तस्मादितो भ्रष्टस्ततो भ्रष्ट इति पदं तेन नारोहणीयमिति सूच्यते ।

यथा काष्टभारो यावद्बंधितोऽस्ति तावत् केनापि तच्छेत्तुं न शक्यते । परं स एव यदा रज्जुबंधनरहितो भवति तदा तत्रत्य-काष्ठा अपि सुलभेन छेद्या भवंति अतः प्राचीनैर्नियमेन यो नियमि-तोऽस्ति स एव गुणकर्मानुसारप्रतिपादितवर्णाश्रमधर्मः श्रेष्ठ इति मंतव्यम् । तद्वद्विनष्टवर्णाश्रमधर्मः शरीरमनोबुद्धिबलानां ह्रासमापद्य समूलं विनश्यति । एवं प्रतिबंधप्रबंधाभावात् स्वेच्छाचारविचारव्य-वहारेषु प्रवृत्तिर्भवेदात्यतिमात्रं परिभाव्य मनस्वी धर्मशास्त्रो-क्तं धर्मत्वेन विहितं कर्म कुर्वन् ज्ञानी घोरतपश्चर्येणेश्वरप्रसादयोग्यो-भूत्वा विज्ञातात्मतत्वो दुःसाध्यमुक्तिं साधयेत् । मुक्तेरेव सर्वपुरुषार्थे-षु प्रधानत्वादातिदुर्लभत्वात् संतीर्णाशेषविषयसिंधुलभ्यत्वात् बहुपुण्य परिपाकसाध्यत्वाद्बहुजन्मासेवितसद्धर्मसंग्रहलभ्यत्वाच्चित्तप्रसादैकमूल-त्वादितरस्माद्वैलक्षण्यादस्य मोक्षस्य श्रेष्ठत्वं सर्वत्र जेगीयते । अतः सर्वमानवैरंतिमपुरुषार्थाय प्रयत्नः कार्य इति सूच्यते ॥

परं कैश्चिदुच्यतेऽतिमाश्रमावलंबिभिः किमपि कर्तव्यं नास्तीति तदेतदयुक्तं यतः सन्यासिभिः फलाभिसंधिं त्यक्त्वा राष्ट्रोपकारकविद्याधर्मोपदेशादयः सर्वदा अद्वेषभावनया कर्तव्या एव । कर्तव्यस्य सर्वशास्त्रेषु प्रोक्तत्वात्तथैव लोके शिष्टाचारदर्शनाच्च निष्कर्मवादोऽयं निंद्य इति दृश्यते । अर्वाचीनाः श्रीरामदासरामकृष्णादिपरमहंसाः स्वदेशधर्माद्युन्नत्यर्थं कथं कीदृक्परिश्रममकुर्वन् यावन्मरणमिति तेषां जीवनचरित्रेणावबुध्यते । पश्य तावच्छ्रीरामदासेन राष्ट्रधर्मयोर्दुर्दश दृष्ट्वा यो विह्वलभावः प्रदर्शितस्तथा तयोरुन्नत्यर्थं ये साहसोपाया निस्पृहत्वेन प्रदर्शितास्तान् श्रुत्वा कस्य वा हर्षरोमोद्भवो न जायेत । प्रबलप्रतापोद्दीपितनरशिरोमणिं क्षत्रियकुलालंकारं श्रीशिवाजिनरेशं महाराष्ट्रभाषायां यथा बोधयति श्रीरामदासः ।

मुख्य हरिकथा निरूपण । दुसरें ते राजकारण ।
तिसरे ते सावधपण । सर्व विषयीं ॥ ( दासबोधे ११-५-४)

हरिकथा निरूपपण । नेमस्तपणे राजकारण ।
वर्तायाचें लक्षण । तेंही असावें । ( दासबोधे १-६ ४ )

श्रीगुरुसमर्थ एकांत बैसती । प्रांतीचे लोक दर्शनासी येती । सकल प्रांतीचा स्वामीपरामृश घेती । चिंता करिती विश्वाची । देशकाल वर्तमानें । आपण चिंता ग्रस्त होती मनें । ह्मणती कैसीं वाचतील जनें । कैसी ब्राह्मण्यें राहतील ॥ कैसी क्षेम राहेल जगती । कैसी

देवदेवालये तगतीं । कैसे कुटुंबवत्सल लोक जगती ।
कोणेकडे जातील हे । ( समर्थप्रतापग्रंथे )
समर्थ आज्ञा पुसे शिवराजा । श्रीरघुनाथ देवालय मी
बांधेन वोजा । समर्थ म्हणती शिष्य समुदाय माझा ।
देवालयें करवीन अनंत हस्तें ॥ ( समर्थप्रतापग्रंथे )

एवं पुरुषोत्तमेन श्रीरामदासस्वामिना संबोधितानि वाक्यानि श्रुत्वा कथं तेषां प्राचीनसन्यासिनां हृदि राष्ट्रधर्मयोरुन्नतिविषये स्फूर्तिरासीदित्येतद्वाचकैरेवानुमेयम् । उपरिनिर्दिष्टश्रीरामदासादिशिष्टैर्यथाऽऽचरितं तद्वत्सर्वैर्निराभारिपरिव्राजकादिपदप्राप्तैरवश्यमेवाचरणीयमिति निश्चीयते । तथैतावत्कालपर्यंतं विवेचितस्य वर्णाश्रधर्मस्योभयथापि फलहेतुत्वादुभयत्रश्रेयः प्रदत्वादवश्यमेवायं वर्णाश्रमधर्मः सर्वैर्विधिवदाचरणीय इति निवेदये ॥

इति श्रीमद्दक्षिणकाशीसिंहासनाधीश्वरचौडय्यदानपुरसंस्थानप्रवर्तकश्रीशिवदेवस्वामिवंशजेन पंडितधर्मभूषणवेदतीर्थादिपदवीप्रतिष्ठितेन इंदूरसंस्कृतमहाविद्यालये वेदभाष्याध्यापनपदमलंकुर्वाणेन श्रीविरूपाक्षवडियरस्वामिना विरचितेऽस्मिन् शास्त्रबोधे चतुर्थोभागः समाप्तः ।

[ पंचदशाधिकैकोनविंशतिशततमे क्रैस्ताद्बे १९१५ शास्त्रबोधोऽयं प्रणीतः ॥ ]

